अथ प्रथमदिने ॥ ४ मूलं अ आई हंसः । ४ मूलं अ काई हंसः...४ मूलं अ क्षाई हंसः । ३६ ॥ पुनः ४ मूलं आ आई हंसः । ४ मूलं आ काई हंसः...४ मूलं आ क्षाई हंसः । ३६ ॥ एवं इ आ, इ का, इ खा...इ क्षा । ३६ ॥ ई आ, ई का...ई क्षा । ३६ ॥ एवम् उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः—एतेषां च अः आई हंसः । अः काई हंसः...अः क्षाई हंसः । इत्यन्त जपेत् । एवं पट्सप्तत्युत्तर-पञ्चशतसंख्याको जपो भवति मूलविद्यायाः । अत्र पारायणे प्रथमं तद्दिनयुगाक्षरात् षोडशस्वरभिन्नादुत्पन्नषट्सप्तत्युत्तर-पञ्चशतविद्याभिः सह मूलं जपित्वा पश्चात्तद्दिनाक्षरजनित-विद्याभिः तावत्संख्याभिः सह प्रोक्तक्रमेण मूलं जपेत् । युगा-क्षरदिनाक्षरे तु तद्दिननित्यविद्यायाः प्रथमाक्षरं द्वितीयाक्षरं च बोध्यम् । युगाक्षरोत्थविद्याजपे विशेषस्तु—यस्मिन्युगे यत्स्वर-युतं युगाक्षरं भवति तत्स्वरमारभ्य प्रतिस्वरं षट्त्रिंशत्क्रमेण तद्विसर्गान्तिमविद्यापर्यन्तं जपित्वा पुनस्तदक्षरस्य प्रथमस्वरमा-रभ्य आरब्धस्वरस्य पूर्वस्वरान्तिमविद्यावधि जपेत् । तदा मूलस्य ५७६ जपो भवति । अत्र युगस्तु षट्त्रिंशद्दिनात्मको भवति । प्रागुक्तपूर्णमण्डलवर्णेषु ५७६ संख्याकेषु एकैकाक्षरस्य एकैकयुगं प्रति युगाक्षरत्वं च भवति । एतत्सर्वं दिननित्यविद्या-कर्म गुरुमुखादेव जानीयात् । एवं द्विपञ्चाशदुत्तरैकादशशत-संख्याको जपो भवति मूलस्य । अङ्गविद्यायास्तु एकैकवर्णादौ

एकनवतिसंख्याकः । तेन वर्गद्वयादौ जपो व्यशीत्युत्तरशत-संख्याको भवति । केवलं मूलजपोऽपि वारचतुष्टयं त्रिस्त्रिरा-वृत्त्या द्वादशधा भवति । एवं संभूय १३४६ संभवन्ति मूलस्य । एवमुक्तसंख्याकजपमुक्तविधिना कृत्वा मूलं त्रिर्जपित्वा ४ मूलं डरलकसहैं ह्सकलरडीं ह्सकलरडौः इत्युत्तीर्णविद्यां सकृज्जपित्वा मम सकलमनोरथान् साधय साधय तुभ्यं नमः इति प्रार्थनीविद्यां कृताञ्जलिः सकृज्जपेत् । इति वर्गद्वयस्याप्यन्ते बोध्यम् । इत्थं पारायणजपं कृत्वा स्तोत्रमिदं पठेत् । तद्यथा—

क्ष्मारव्यश्रीरणसार्केन्दुयष्ट्राप्रयुगाक्षरैः ।
मातृभैरवगां वन्दे देवीं त्रिपुरभैरवीम् ॥

कादिवर्गाष्टकाकारसमस्ताष्टकविग्रहाम् ।
अष्टशक्त्यावृतां वन्दे देवीं त्रिपुरभैरवीम् ॥

स्वरषोडशकानां तु षट्त्रिंशद्भिः परापरैः ।
षट्त्रिंशत्तत्त्वगां वन्दे देवीं त्रिपुरभैरवीम् ॥

षट्त्रिंशत्तत्त्वसंस्थाप्याशिवचन्द्रकलास्वपि ।
कादितत्त्वान्तरां वन्दे देवीं त्रिपुरभैरवीम् ॥

आईमायाद्वयोपाधिविचित्रेन्दुकलावतीम् ।
सर्वात्मिकां परां वन्दे देवीं त्रिपुरभैरवीम् ॥

षडध्वपिण्डयोनिस्थमण्डलत्रयकुण्डलीम् ।
लिङ्गत्रयात्मिकां वन्दे देवीं त्रिपुरभैरवीम् ॥

स्वयंभूहृदयां बाणभ्रूकामाङ्कस्थितेतराम् ।
प्राप्तप्रत्यञ्चितिं वन्दे देवीं त्रिपुरभैरवीम् ॥
अक्षान्तरगताशेषनामरूपक्रियां पराम् ।
शक्तिं विश्वेश्वरीं वन्दे देवीं त्रिपुरभैरवीम् ॥
वर्गान्ते पठितं यस्यास्स्तोत्रमेतत्समाहितैः ।
सर्वान्कामानवाप्नोति अन्ते सायुज्यमाप्नुयात् ॥

इति स्तुत्वा जपं देव्यै समर्पयेत् ।

एवं द्वितीयदिने प्राग्वत् अङ्गविद्याजपान्तं विधाय ४ मूलं क आईं हंसः । क काईं हंसः । क खाईं हंसः...क क्षाईं हंसः । पर्यन्तम् ३६ ॥ का आईं हंसः । का काईं हंसः ।...का क्षाईं हंसः । ३६ ॥ कि आईं हंसः । कि काईं हंसः ।...कि क्षाईं हंसः ॥ ३६ ॥ एवं की कु कू कृ कॄ कॢ कॣ के कै को कौ कं कः ।

एवं षट्त्रिंशद्दिनेषु च प्रागुक्तपरिपाट्या प्रत्यहं १३४६ संख्या यथा भवति तथा जपं कृत्वा वर्गद्वयस्यान्ते स्तोत्रं पठेत् ॥

इति नामपारायणविधिः ।

अथ मन्त्रपारायणविधिः ।

माया कुण्डलिनी क्रिया मधुमती काली कला मालिनी
मातङ्गी विजया जया भगवती देवी शिवा शांभवी ।
शक्तिः शंकरवल्लभा त्रिनयना वाग्वादिनी भैरवी
ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥

माया = ह्रीं ; कुण्डलिनी = ऐं ; क्रिया = क्लीं ; मधुमती = मातृका शुद्धा सबिन्दुका सविसर्गा सबिन्दुविसर्गा चेति चतुर्विधा ; कालीत्यादि शांभवीत्यन्तानि दश नामानि । शक्तिः = सौः ; शंकरवल्लभा = ह्स्रीं ; त्रिणयना = वौषट् ; वाग्वादिनी = वद वद वाग्वादिनि स्वाहा ; भैरवी = ह्स्रैं ह्स्क्लरीं ह्स्रौः ; ह्रींकारी = ह्रीं ; त्रिपुरा = क-१५ ; परापरमयी = ह्सौः स्हौः ; माता = ह्स्क्लरडैं ह्स्क्लरडीं ह्स्क्लरडौः ; कुमारी = ऐं क्लीं सौः ॥

एभिः श्रीमूलविद्यायाः श्रीमदाराध्यचरणकृपाप्राप्तो मन्त्र-पारायणक्रमः । तत्र कृतप्रातराह्निकक्रियो विविक्ते स्थाने स्वासनमास्तीर्य ह्रीं आधारशक्तिकमलासनाय नमः इति तत्संपूज्य, तत्र प्राङ्मुख उपविश्य गुरुगणपतिपरदेवताः प्रणम्य मूलविद्यया प्राणायामत्रयं कृत्वा संक्षेपतो भूतशुद्धिं प्राणप्रतिष्ठां मातृकान्यासं मूलविद्यायाः ऋष्यादिकरषडङ्गन्यासं चतुरासनन्यासं वाग्देवताष्टकन्यासं च कृत्वा देवीं ध्यात्वा मानसैरुपचारैः संपूज्य श्रीपरदेवतात्मकः पारायणजपमारभेत ।

मन्त्रपारायणम् ।

तत्र प्रथमदिने—

| | |
|---|---|
| ४ मूलं ह्रीं अ काली सौः | ४ मूलं ह्रीं अं काली सौः |
| ,, ,, आ ,, ,, | ,, ,, आं ,, ,, |
| * * | * * |
| ,, ,, ळ ,, ,, | ,, ,, ळं ,, ,, |
| ,, ,, क्ष ,, ,, 51 | ,, ,, क्षं ,, ,, 51 |

४ मूलं ह्रीं अः काली सौः
,, ,, आः ,, ,,
* *
,, ,, ळः ,, ,,
,, ,, क्षः ,, ,,
51
,, ,, अंः ,, ,,
,, ,, आंः ,, ,,
* *
,, ,, ळंः ,, ,,
,, ,, क्षंः ,, ,, 51
204

इति मायाबीजेन सह शुद्धादिमातृकाचतुष्टयवर्णैः कालीनाम्ना शक्तिमन्त्रेण च चतुरधिकद्विशतवारं मूलविद्यां जपेत् ।

४ मूलं ऐं अ काली सौः
,, ,, आ ,, ,,
* *
,, ,, ळ ,, ,,
,, ,, क्ष ,, ,,
51

४ मूलं ऐं अं काली सौः
,, ,, आं ,, ,,
* *
,, ,, ळं ,, ,,
,, ,, क्षं ,, ,,
51
,, ,, अः ,, ,,
,, ,, आः ,, ,,
* *
,, ,, ळः ,, ,,
,, ,, क्षः ,, ,,
51
,, ,, अंः ,, ,,
,, ,, आंः ,, ,,
* *
,, ,, ळंः ,, ,,
,, ,, क्षंः ,, ,,
51
204

इति कुण्डलिनीबीजेन सह प्राग्वत् चतुरधिकद्विशतवारं मूलविद्यां जपेत् ।

| | |
|---|---|
| ४ मूलं क्रीं अ काली सौः | ४ मूलं क्रीं अः काली सौः |
| ,, ,, आ ,, ,, | ,, ,, आः ,, ,, |
| * | * |
| ,, ,, ळ ,, ,, | ,, ,, ळः ,, ,, |
| ,, ,, क्ष ,, ,, 51 | ,, ,, क्षः ,, ,, 51 |
| ,, ,, अं ,, ,, | ,, ,, अंः ,, ,, |
| ,, ,, आं ,, ,, | ,, ,, आंः ,, ,, |
| * | * * |
| ,, ,, ळं ,, ,, | ,, ,, ळंः ,, ,, |
| ,, ,, क्षं ,, ,, 51 | ,, ,, क्षंः ,, ,, 51 |

इति क्रियाबीजेन सह पूर्ववत् चतुराधिकद्विशतवारं जपेत् । 204

| | |
|---|---|
| एवं कालीनाम्नि द्वादशोत्तरषट्छतसंख्याको जपः | ६१२ |
| ,, कला ,, ,, | ६१२ |
| ,, मालिनी ,, ,, | ६१२ |
| ,, मातङ्गी ,, ,, | ६१२ |
| ,, विजया ,, ,, | ६१२ |
| ,, जया ,, ,, | ६१२ |
| ,, भगवती ,, ,, | ६१२ |
| ,, देवी ,, ,, | ६१२ |
| ,, शिवा ,, ,, | ६१२ |
| ,, शांभवी ,, ,, | ६१२ |

आहत्य दशानामपि नाम्नां विंशत्युत्तरैकशताधिकषट्सहस्रं ६१२०

| | | | | |
|---|---|---|---|---|
| एवं प्रथमदिनस्य जपसंख्या— | | | | ६१२० |
| द्वितीयदिने सौः इत्यस्य स्थाने ह्स्रौं इति निवेश्य जपेत् | | | | ६१२० |
| तृतीयदिने | ,, | वौषट् | ,, | ६१२० |
| चतुर्थदिने | ,, | वद वद वाग्वादिनि स्वाहा इति निवेश्य जपेत् | | ६१२० |
| पञ्चमदिने | ,, | ह्स्रैं ह्स्क्लीं ह्स्रौः | ,, | ६१२० |
| षष्ठदिने | ,, | ह्रीं | ,, | ६१२० |
| सप्तमदिने | ,, | क-१५ | ,, | ६१२० |
| अष्टमदिने | ,, | ह्सौः स्हौः२ | ,, | ६१२० |
| नवमदिने | ,, | ह्स्क्ल्रूँ ह्स्क्ल्रूँीं ह्स्क्ल्रूहौः | ,, | ६१२० |
| दशमदिने | ,, | ऐं क्लीं सौः | ,, | ६१२० |
| आहत्य दशानामपि दिनानां जपसंख्या | | | ... | ६१२०० |

द्विशत्युत्तरैकषष्टिसहस्राणि ।

इति मन्त्रपारायणम् ।

इत्याह्निकप्रकरणं समाप्तम् ॥



ॐ

श्रीगुरुभ्यो नमः ।

श्रीमहागणपतये नमः ।

श्रीललितामहात्रिपुरसुन्दर्यै नमः ।

# ॥ श्रीविद्यानित्याह्निकम् ॥

## द्वितीयः खण्डः ।

### *लघुपूजा ।

आब्रह्मलोकादाशेषादालोकालोकपर्वतात् ।
ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमाम्यहम् ॥

ओं नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः । सर्वोपप्लवरहितप्रज्ञानघनप्रत्यगर्थो ब्रह्माहमस्मि, सोहमस्मि ब्रह्माहमस्मि ॥

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं बटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीरान्द्यष्ट चतुष्कषष्टिनवकं वीरावलीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

---

* इयं लघुपूजा श्रीगुहानन्दमण्डल्या पूर्वं प्रकाशितां श्रीविद्यासपर्यापद्धतिमनुसृत्य संकलिता ।

ओं ऐं ह्रीं श्रीं भं भद्रकाल्यै नमः । (द्वारस्य दक्षशाखायां)
४ भं भैरवाय नमः । ( ,, वामशाखायां)
४ लं लम्बोदराय नमः । ( ,, ऊर्ध्वशाखायां)

इति द्वारदेवताः संपूज्य ।

ओं ऐं ह्रीं श्रीं ऐं कएईलह्रीं आत्मतत्त्वं शोधयामि स्वाहा ।
४ क्लीं हसकहलह्रीं विद्यातत्त्वं शोधयामि स्वाहा ।
४ सौः सकलह्रीं शिवतत्त्वं शोधयामि स्वाहा ।
४ ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं सर्वतत्त्वं शोधयामि स्वाहा ॥ इत्याचम्य

ओं ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोहं, ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं स्वरूपनिरूपणहेतवे श्रीगुरवे नमः, अमुका-नन्दनाथश्रीपादुकां पूजयामि नमः ॥

ओं ऐं ह्रीं श्रीं, ऐं क्लीं सौः, सोहं हंसः शिवः ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः सोहं हंसः शिवः स्वच्छप्रकाशविमर्शहेतवे श्रीपरमगुरवे नमः, अमुका-नन्दनाथ-श्रीपादुकां पूजयामि नमः ॥

ओं ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोहं हंसः ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं हंसः स्वात्मारामपञ्जरविलीनतेजसे श्रीपरमेष्ठिगुरवे नमः अमुका-नन्दनाथश्रीपादुकां पूजयामि नमः ॥

इति मृगीमुद्रया गुरुपादुकामुच्चार्य, सुमुख-सुवृत्त-चतुरश्र-मुद्गर-योन्याख्याभिः पञ्चभिर्मुद्राभिः श्रीगुरून् वामभुजे प्रणम्य, गणपतिमूलेन स्वदक्षभुजे योनिमुद्रया महागणपतिं प्रणमेत् ॥

आगमार्थं च देवानां गमनार्थं तु रक्षसाम् ।
कुर्याद् घण्टारवं तत्र देवताह्वानलाञ्छनम् ॥

इति घण्टानादं कृत्वा ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

मूलेन प्राणानायम्य । देशकालौ संकीर्त्य—

मम श्रीललितामहात्रिपुरसुन्दरीप्रीत्यर्थं यथासंभवद्रव्यैः यथाशक्ति सपर्याक्रमं निर्वर्तयिष्ये, तेन परमेश्वरं प्रीणयामि ॥

आत्मानमलंकृत्य प्रमुदितचित्तः शिवोऽहं इति भावयेत् ॥

आसनमास्तीर्य दक्षिणहस्ते जलमादाय सौः इति द्वादशवारमभिमन्त्र्य तज्जलेन मूलमन्त्रेण आसनं प्रोक्षयेत् ॥

ओं ऐं ह्रीं श्रीं ओं ह्रीं आधारशक्तिकमलासनाय नमः ।

इति पुष्पाक्षतैः आसनमभ्यर्च्य आसने उपविशेत् ॥

४ रक्तद्वादशशक्तियुक्ताय द्वीपनाथाय नमः ।

इति भूमौ पुष्पाञ्जलिं विकिरेत् ॥

४ समस्तप्रकट-गुप्त-गुप्ततर-संप्रदाय-कुलोत्तीर्ण-निगर्भ-रहस्याति-रहस्य-परापरातिरहस्ययोगिनीभ्यो नमः ।

इति मूर्ध्नि बद्धाञ्जलिः ।

४ ऐं ह्रः अस्त्राय फट्—इति अस्त्रमन्त्रेण मुहुरावृत्तेन अङ्गुष्ठादि कनिष्ठिकान्तं करतलयोः कूर्परयोः देहे च व्यापकं कुर्यात् ॥

४ श्रीगुरो दक्षिणामूर्ते भक्तानुग्रहकारक ।
अनुज्ञां देहि भगवन् श्रीचक्रयजनाय मे ॥ इत्यनुज्ञाप्य

४ ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं ओं हंसः सोहं, सोहं हंसः शिवः, श्रीचक्रस्य प्राणा इह प्राणाः ॥

४ ओं आं ह्रीं क्रों श्रीचक्रस्य जीव इह स्थितः । सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणा इहैवागत्य अस्मिन् चक्रे सुखं चिरं तिष्ठन्तु स्वाहा ॥

४ ओं असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् । ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृळया नस्स्वस्ति ॥

इति लघुप्राणप्रतिष्ठा ।

ओं ऐं ह्रीं श्रीं अमृताम्भोनिधये नमः
४ रत्नद्वीपाय नमः
४ नानावृक्षमहोद्यानाय नमः
४ कल्पादिकदम्बान्तवाटिकापङ्क्त्यै नमः
४ पुष्परागादिविद्रुमान्तनवरत्नप्राकारेभ्यो नमः
४ माणिक्यमण्टपाय नमः
४ सहस्रस्तम्भमण्टपाय नमः

४ अमृतादिवापिकात्रयाय नमः
४ बालातपोद्गाराय नमः
४ चन्द्रिकोद्गाराय नमः
४ महाशृङ्गारपरिघायै नमः
४ महापद्माटव्यै नमः
४ चिन्तामणिमयगृहराजाय नमः
४ चतुराम्नायमयचतुर्द्वारेभ्यो नमः
४ रत्नप्रदीपवलयाय नमः
४ मणिमयमहासिंहासनाय नमः
४ पञ्चब्रह्ममयमञ्चाय नमः
४ हंसतूलिकातल्पाय नमः
४ हंसतूलिकामहोपधानाय नमः
४ कौसुम्भास्तरणाय नमः
४ महावितानकाय नमः
४ महामायायवनिकायै नमः

इति मन्दिरपूजा ।

दीपदेवि महादेवि शुभं भवतु मे सदा ।
यावत्पूजासमाप्तिः स्यात्तावत्प्रज्वल सुस्थिरा ॥

इति दीपे पुष्पाञ्जलिं दद्यात् ॥

मूलेन चक्रमध्ये पुष्पाञ्जलिं विकीर्य, मूलत्रिखण्डेन स्वाग्र-वामदक्षकोणेषु पुष्पाञ्जलीन् दद्यात् ॥

भूतशुद्धिः ।

श्वाससमीरं पिङ्गलया अन्तराकृष्य—

४ मूलशृङ्गाटकात् सुषुम्नापथेन जीवशिवं परमशिवपदे योजयामि स्वाहा—इति मन्त्रेण मूलाधारस्थितं जीवात्मानं सुषुम्नावर्त्मना ब्रह्मरन्ध्रं नीत्वा परमशिवेन एकीभूतं विभाव्य इडया वायुं रेचयेत् ॥

४ यं १६. (इडया पूरयित्वा) संकोचशरीरं शोषय शोषय स्वाहा—इति निजशरीरं शोषितं विभाव्य पिङ्गलया रेचयेत् ॥

४ रं १६. (पिङ्गलया पूरयित्वा) संकोचशरीरं दह दह पच पच स्वाहा—इति प्लुष्टं भस्मीकृतं च विभाव्य इडया रेचयेत् ॥

४ वं १६. (इडया पूरयित्वा) परमाशिवामृतं वर्षय वर्षय स्वाहा—इति तद्भस्म सहस्रारेन्दुमण्डलविगलदमृतरसेन सिक्तं च विभाव्य पिङ्गलया रेचयेत् ॥

४ लं १६. (पिङ्गलया पूरयित्वा) शांभवशरीरमुत्पादयोत्पादय स्वाहा—इति तद्भस्मनो दिव्यशरीरमुत्पन्नं विभाव्य इडया रेचयेत् ॥

४ हंसः सोहं (इडया पूरयित्वा) अवतर अवतर शिवपदात् जीव सुषुम्नापथेन प्रविश मूलशृङ्गाटकं उल्लसोल्लस ज्वल ज्वल प्रज्वल प्रज्वल हंसः सोहं स्वाहा—इति परमशिवेनैकीकृतं जीवं पुनः सुषुम्नावर्त्मना मूलाधारे स्थापितं चिन्तयेत् ॥

इति भूतशुद्धिः ।

अथ हृदि दक्षकरतलं निधाय ४ आं सोहं इति त्रिः पठेत्॥
इत्यात्मप्राणप्रतिष्ठां कृत्वा

अथ मूलेन षोडशधा दशधा त्रिधा वा प्राणानायम्य ॥

४ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥

इति मन्त्रमुच्चार्य युगपद्वामपार्ष्णिभूतलाघातत्रय—करास्फोटनत्रय—क्रूरदृष्ट्यवलोकनपूर्वकतालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत् ॥

अथ नमः इति अङ्कुशमन्त्रमुच्चारयन् अङ्कुशमुद्रया शिखां बध्नीयात् ॥

मातृकान्यासः ।

अस्य श्रीमातृकासरस्वतीन्यासमहामन्त्रस्य ब्रह्मा ऋषिः, गायत्री छन्दः, श्रीमातृकासरस्वती देवता । हल्भ्यो बीजेभ्यो नमः, स्वरेभ्यः शक्तिभ्यो नमः, बिन्दुभ्यः कीलकेभ्यो नमः, मम श्रीविद्याङ्गत्वेन न्यासे विनियोगः ॥

सर्वमातृकया सर्वाङ्गे अञ्जलिना त्रिर्व्यापकं कुर्यात् ॥

*७ अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः
७ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः
७ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः
७ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः

* ७=ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः ।

७ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः
७ अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकर-
पृष्ठाभ्यां नमः ।

एवं हृदयादिन्यासः । भूर्भुवस्सुवरोम् इति दिग्बन्धः ॥

ध्यानम् ।

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो-
देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणामब्जसंस्था-
मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

लमित्यादि पञ्चपूजां कृत्वा ।

बहिर्मातृका ।

मातृकाः त्रितारीबालापूर्विकाः 'नमः हंसः' इत्यन्ताः स्वाङ्गेषु न्यसेत् ।

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः
अं नमः हंसः (शिरसि)
७ आं ,, (मुखवृत्ते)
७ इं ,, (दक्षनेत्रे)
७ ईं ,, (वामनेत्रे)
७ उं ,, (दक्षकर्णे)
७ ऊं ,, (वामकर्णे)
७ ऋं ,, (दक्षनासापुटे)
७ ॠं ,, (वामनासापुटे)

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः
लृं नमः हंसः (दक्षकपोले)
७ ॡं ,, (वामकपोले)
७ एं ,, (ऊर्ध्वोष्ठे)
७ ऐं ,, (अधरोष्ठे)
७ ओं ,, (ऊर्ध्वदन्तपंक्तौ)
७ औं ,, (अधोदन्तपंक्तौ)
७ अं ,, (जिह्वाग्रे)
७ अः ,, (कण्ठे)

७ कं नमः हंसः (दक्षबाहुमूले)
७ खं ,, (दक्षकूर्परे)
७ गं ,, (दक्षमणिबन्धे)
७ घं ,, (दक्षकराङ्गुलिमूले)
७ ङं ,, (दक्षकराङ्गुल्यग्रे)
७ चं ,, (वामबाहुमूले)
७ छं ,, (वामकूर्परे)
७ जं ,, (वाममणिबन्धे)
७ झं ,, (वामकराङ्गुलिमूले)
७ ञं ,, (वामकराङ्गुल्यग्रे)
७ टं ,, (दक्षोरुमूले)
७ ठं ,, (दक्षजानुनि)
७ डं ,, (दक्षगुल्फे)
७ ढं ,, (दक्षपादाङ्गुलिमूले)

७ णं नमः हंसः (दक्षपादाङ्गुल्यग्रे)
७ तं ,, (वामोरुमूले)
७ थं ,, (वामजानुनि)
७ दं ,, (वामगुल्फे)
७ धं ,, (वामपादाङ्गुलिमूले)
७ नं ,, (वामपादाङ्गुल्यग्रे)
७ पं ,, (दक्षपार्श्वे)
७ फं ,, (वामपार्श्वे)
७ बं ,, (पृष्ठे)
७ भं ,, (नाभौ)
७ मं ,, (जठरे)
७ यं ,, (हृदये)
७ रं ,, (दक्षकक्षे)
७ लं ,, (गलपृष्ठे)

७ वं नमः हंसः (वामकक्षे)
७ शं ,, (हृदयादिदक्षकराङ्गुल्यन्तं)
७ षं ,, (हृदयादिवामकराङ्गुल्यन्तं)
७ सं ,, (हृदयादिदक्षपादाङ्गुल्यन्तं)
७ हं ,, (हृदयादिवामपादाङ्गुल्यन्तं)
७ ळं ,, (कट्यादिपादाङ्गुल्यन्तं)
७ क्षं ,, (कट्यादिब्रह्मरन्ध्रान्तं)

इति बहिर्मातृका ।

अन्तर्मातृका ।

७ अं नमः हंसः, आं नमः हंसः + + अः नमः हंसः ॥

कण्ठे विशुद्धिचक्रे षोडशदलकमले ।

७ कं नमः हंसः, खं नमः हंसः + + ठं नमः हंसः ॥

हृदये अनाहते द्वादशदलकमले ।

७ डं नमः हंसः, ढं नमः हंसः + + फं नमः हंसः ॥

नाभौ मणिपूरे दशदलकमले ।

७ बं नमः हंसः, भं नमः हंसः + + लं नमः हंसः ॥

लिङ्गमूले स्वाधिष्ठाने षड्दलकमले ।

७ वं नमः हंसः, शं नमः हंसः + + सं नमः हंसः ॥

गुदोपरि मूलाधारे चतुर्दलकमले ।

७ हं नमः हंसः, क्षं नमः हंसः ॥

भ्रुवोर्मध्ये आज्ञाचक्रे द्विदले ।

७ अं नमः हंसः, आं नमः हंसः + + क्षं नमः हंसः ॥

(५० वर्णाः) मूर्ध्नि सहस्रारे

इति अन्तर्मातृका ।

अथ मूलविद्यावर्णन्यासं ऋष्यादिकरषडङ्गन्यासं च यथोपदेशं कुर्यात् ॥

कलशपूजा ।

स्वपुरतो वामभागे त्रिकोणवृत्तचतुरश्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य, मण्डलं मूलेन समभ्यर्च्य, कर्पूरादिवासितजलपूरितं कलशं गन्धपुष्पाक्षतैरलंकृत्य मण्डलोपरि संस्थापयेत् ॥

ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥
अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः ॥

ॐ आपो वा इदँ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दाँस्यापो ज्योतीँष्यापो यजूँष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवस्सुवराप ओं ॥

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन्संनिधिं कुरु ॥
सर्वे समुद्राः सरितस्तीर्थानि च नदा ह्रदाः ।
आयान्तु देवीपूजार्थं दुरितक्षयकारकाः ॥

मूलेन अष्टवारमभिमन्त्र्य, धेनुमुद्रां प्रदर्श्य, तज्जलेन पूजोपकरणानि आत्मानं च प्रोक्षयेत् ॥

शङ्खपूजा ।

वर्धनीपात्रस्य दक्षिणतः वर्धनीपात्रगतेन जलेन बिन्दु-त्रिकोण-षट्कोण-वृत्त–चतुरश्रात्मकं मण्डलं मत्स्यमुद्रया निर्माय मूलेनाभ्यर्च्य—

४ अस्त्राय फट्—इति शङ्खपात्रस्य आधारं प्रक्षाल्य

४ अं अग्निमण्डलाय धर्मप्रददशकलात्मने श्रीमहात्रिपुरसुन्दर्याः सामान्यार्घ्यपात्राधाराय नमः—इति मण्डलस्योपरि संस्थाप्य

४ अग्निं दूतं वृणीमहे होतारं विश्ववेदसं अस्य यज्ञस्य सुक्रतुम् रां रीं रूं रैं रौं रः रमलवरयूं अग्निमण्डलाय नमः इति अग्निमण्डलं विभाव्य

४ धूम्रार्चिरादिदशकलाभ्यो नमः—इति संपूज्य

४ अस्त्राय फट्—इति क्षालितं शङ्खं गृहीत्वा

४ उं सूर्यमण्डलायार्थप्रदद्वादशकलात्मने श्रीमहात्रिपुरसुन्दर्याः सामान्यार्घ्यपात्राय नमः—इति संस्थाप्य

४ आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन् । हां हीं हूं हैं हौं हः । हमलवरयूम् । सूर्यमण्डलाय नमः—इति सूर्यमण्डलं विभाव्य

४ तपिन्यादिद्वादशकलाभ्यो नमः—इति संपूज्य

४ मं सोममण्डलाय कामप्रदषोडशकलात्मने महात्रिपुरसुन्दर्याः सामान्यार्घ्यामृताय नमः—इति वर्धनीसलिलमापूर्य

४ आप्यायस्व समेतु ते विश्वतः सोमवृष्णियं भवावाजस्य संगथे । सां सीं सूं सैं सौं सः समलवरयूं सोममण्डलाय नमः—इति सोममण्डलं विभाव्य

४ अमृतादिषोडशकलाभ्यो नमः—इति संपूज्य ततस्तस्मिन्शङ्खे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च क्रमेण षडङ्गैः संपूजयेत् ।

तद्यथा—

४ ऐं क-५ हृदयाय नमः । हृदयशक्तिश्रीपादुकां पूजयामि नमः
४ क्लीं ह-६ शिरसे स्वाहा । शिरःशक्तिश्रीपादुकां ,,
४ सौः स-४ शिखायै वषट् । शिखाशक्तिश्रीपादुकां ,,
४ ऐं क-५ कवचाय हुं । कवचशक्तिश्रीपादुकां ,,
४ क्लीं ह-६ नेत्रत्रयाय वौषट् । नेत्रशक्तिश्रीपादुकां ,,
४ सौः स-४ अस्त्राय फट् । अस्त्रशक्तिश्रीपादुकां ,,

ततः अस्त्राय फट् इति संरक्ष्य, कवचाय हुं इति अवकुण्ठ्य, धेनुयोनिमुद्रे प्रदर्श्य, मूलेन सप्तवारमभिमन्त्र्य, तत्सलिलपृषतैः पूजोपकरणानि आत्मानं च प्रोक्ष्य, शङ्खजलात् किंचित् वर्धन्यां क्षिपेत् ॥

अन्तर्यागः ।

आमूलाधाराद्ब्रह्मबिलं विलसन्तीं बिसतन्तुतनीयसीं विद्युत्पुञ्जपिञ्जरां विवस्वदयुतभास्वत्प्रकाशां परःशतसुधामयूखशीतलतेजोदण्डरूपां परचितिं भावयेत् । तेजोरूपेण परिणतां परमशिवज्योतिरभिन्नप्रकाशात्मिकां वियदादिविश्वकारणां सर्वावभासिकां स्वात्माभिन्नां पराचितिं सुषुम्नापथेन उद्गमय्य विनिर्भिन्नचिधिबिलविलसदमलदशशतदलकमलात् वहन्नासापुटेन निर्गतां त्रिखण्डमुद्रामण्डितशिखण्डे कुसुमगर्भितेऽञ्जलौ समानीय—

४ ह्रीं श्रीं सौः श्रीललितायाः अमृतचैतन्यमूर्तिं कल्पयामि नमः ॥ मूलमन्त्रध्यानश्लोकोक्तरूपेण देवीं निजलीलाङ्गीकृतललितवपुषं विचिन्त्य

९

आवाहनम् ।

४ ह्सैं ह्स्क्लरीं ह्स्रौः

महापद्मवनान्तस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातः एह्येहि परमेश्वरि ॥

बिन्दुपीठगतनिर्विशेषब्रह्मात्मकश्रीमत्कामेश्वराङ्के श्रीललिता-
महात्रिपुरसुन्दरीपराभट्टारिकामावाहयामि नमः ॥

४ मूलं आवाहिता भव ॥
४ ,, संस्थापिता भव ॥
४ ,, संनिधापिता भव ॥
४ ,, संनिरुद्धा भव ॥
४ ,, संमुखी भव ॥
४ ,, अवकुण्ठिता भव ॥

इति मन्त्रैरावाहनादिषण्मुद्राः प्रदर्श्य, चन्दनधेनुयोनि-
मुद्राश्च प्रदर्शयेत् ।

अथ उपचारपूजा ।

४ श्रीललितायै पाद्यं कल्पयामि नमः
,, आभरणावरोपणं कल्पयामि नमः
,, मज्जनशालाप्रवेशनं ,,
,, *कनककलशच्युतसकलतीर्थाभिषेकं ,,
,, धौतवस्त्रपरिमार्जनं ,,

* इह त्रिपुरादेवी भावना-बह्वृचोपनिषद्भिः श्रीसूक्त-दुर्गासूक्ताभ्यां च
अभिषेकः कार्यः ॥

| | | |
|---|---|---|
| ४ श्रीललितायै | अरुणदुकूलपरिधानं | कल्पयामि नमः |
| ,, | अरुणकुचोत्तरीयं | ,, |
| ,, | दिव्यगन्धसर्वाङ्गीणविलेपनं | ,, |
| ,, | केशभारस्य कालागरुधूपं | ,, |
| ,, | मल्लिकादिसर्वर्तुकुसुममालाः | ,, |
| ,, | नवमणिमकुटादिसर्वाभरणानि | ,, |
| ,, | एककरे पाशं | ,, |
| ,, | अन्यकरेऽङ्कुशं | ,, |
| ,, | इतरकरे पुण्ड्रेक्षुचापं | ,, |
| ,, | अपरकरे पुष्पबाणान् | ,, |
| ,, | श्रीमन्माणिक्यपादुके | ,, |
| ,, | महाचक्राधिरोहणं | ,, |
| ,, | कामेश्वराङ्कपर्यङ्कोपवेशनं | ,, |

चतुरायतनपूजा ।

४ गणपतिमूलं सिद्धलक्ष्मीसमेतमहागणपतिश्रीपादुकां पूजयामि नमः—इति त्रिः ।

४ आदित्यमूलं प्रकाशशक्तिसहितमार्ताण्डभैरवश्रीपादुकां पूजयामि नमः—इति त्रिः ।

४ अष्टाक्षरी श्रीमहालक्ष्मीसमेतमहाविष्णुश्रीपादुकां पूजयामि नमः—इति त्रिः ।

४ पञ्चाक्षरी श्रीसाम्बपरमेश्वरश्रीपादुकां पू०—इति त्रिः ।

लयाङ्गपूजा ।

४ मूलं श्रीललितामहात्रिपुरसुन्दरी (परामट्टारिका) श्रीपादुकां पूजयामि नमः इति बिन्दौ देवीं त्रिः संपूजयेत् ।

षडङ्गार्चनम् ।

देव्यङ्गे (बिन्दौ) अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च—
४ ऐं क-५ हृदयाय नमः । हृदयशक्तिश्रीपादुकां पू० नमः
४ क्लीं ह-६ शिरसे स्वाहा । शिरःशक्तिश्रीपादुकां ,,
४ सौः स-४ शिखायै वषट् । शिखाशक्तिश्रीपादुकां ,,
४ ऐं क-५ कवचाय हुं । कवचशक्तिश्रीपादुकां ,,
४ क्लीं ह-६ नेत्रत्रयाय वौषट् । नेत्रशक्तिश्रीपादुकां ,,
४ सौः स-४ अस्त्राय फट् । अस्त्रशक्तिश्रीपादुकां ,,

नित्यादेवीयजनम् ।

४ अं ऐं सकलह्रीं नित्यक्लिन्ने मदद्रवे सौः अं कामेश्वरी-नित्याश्रीपादुकां पूजयामि नमः ॥

४ आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्त्वान् भगेश्वरि ऐं ब्लूं जं ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं आं भगमालिनीनित्या०

४ इं ओं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा इं नित्यक्लिन्नानित्या०
४ ईं ओं क्रों भ्रों क्रौं झौं छ्रौं जौं स्वाहा ईं भेरुण्डानित्या०
४ उं ओं ह्रीं वह्निवासिन्यै नमः उं वह्निवासिनीनित्या०
४ ऊं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ऊं महावज्रेश्वरीनित्या०
४ ऋं ह्रीं शिवदूत्यै नमः ऋं शिवदूतीनित्याश्री०
४ ॠं ओं ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षें ह्रीं फट् ॠं त्वरितानित्याश्री०
४ लृं ऐं क्लीं सौः लृं कुलसुन्दरीनित्याश्री०
४ ॡं ह्स्क्ल्र्डैं ह्स्क्ल्र्डीं ह्स्क्ल्र्डौः ॡं नित्यानित्या०
४ एं ह्रीं फ्रें स्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीं एं नीलपताकानित्याश्री०
४ ऐं म्म्र्यूं ऐं विजयानित्याश्री०
४ ओं स्वौं ओं सर्वमङ्गलानित्याश्री०
४ औं ओं नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र हुं फट् स्वाहा औं ज्वालामालिनीनित्याश्री०
४ अं च्क्रौं अं चित्रानित्याश्री०
४ अः क-१५ अः ललितामहानित्याश्री०

लयाङ्गपूजा।

४ मूलं श्रीललितामहात्रिपुरसुन्दरी (पराभट्टारिका) श्रीपादुकां पूजयामि नमः इति विन्दौ देवीं त्रिः संपूजयेत्।

षडङ्गार्चनम्।

देव्यङ्गे (बिन्दौ) अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च—

४ ऐं क-५ हृदयाय नमः। हृदयशक्तिश्रीपादुकां पू० नमः
४ क्लीं ह-६ शिरसे स्वाहा। शिरःशक्तिश्रीपादुकां ,,
४ सौः स-४ शिखायै वषट्। शिखाशक्तिश्रीपादुकां ,,
४ ऐं क-५ कवचाय हुं। कवचशक्तिश्रीपादुकां ,,
४ क्लीं ह-६ नेत्रत्रयाय वौषट्। नेत्रशक्तिश्रीपादुकां ,,
४ सौः स-४ अस्त्राय फट्। अस्त्रशक्तिश्रीपादुकां ,,

नित्यादेवीयजनम्।

४ अं ऐं सकलह्रीं नित्यक्लिन्ने मदद्रवे सौः अं कामेश्वरीनित्याश्रीपादुकां पूजयामि नमः॥

४ आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्वान् भगेश्वरि ऐं ब्लूं जें ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं आं भगमालिनीनि

४ इं ओं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा इं नित्यक्लिन्नानित्या०

४ ईं ओं क्रों भ्रों क्रौं झ्रौं छ्रौं ज्रौं स्वाहा ईं भेरुण्डानित्या०

४ उं ओं ह्रीं वह्निवासिन्यै नमः उं वह्निवासिनीनित्या०

४ ऊं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ऊं महावज्रेश्वरीनित्या०

४ ऋं ह्रीं शिवदूत्यै नमः ऋं शिवदूतीनित्याश्री०

४ ॠं ओं ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षें ह्रीं फट् ॠं त्वरितानित्याश्री०

४ ऌं ऐं क्लीं सौः ऌं कुलसुन्दरीनित्याश्री०

४ ॡं ह्स्क्लरड्ैं ह्स्क्लरड्रीं ह्स्क्लरड्ौः ॡं नित्यानित्या०

४ एं ह्रीं फ्रें स्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीं एं नीलपताकानित्याश्री०

४ ऐं भ्म्र्यूं ऐं विजयानित्याश्री०

४ ओं स्वौं ओं सर्वमङ्गलानित्याश्री०

४ औं ओं नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र हुं फट् स्वाहा औं ज्वालामालिनीनित्याश्री०

४ अं च्क्रौं अं चित्रानित्याश्री०

४ अः क-१५ अः ललितामहानित्याश्री०

गुरुमण्डलार्चनम् ।

४ परौघेभ्यो नमः—इति बिन्दुत्रिकोणयोः पुष्पाञ्जलिं दत्वा बिन्दौ महापादुकां यजेत् ॥ यथा—

४ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः श्रीविद्यानन्दनाथात्मकचर्यानन्दनाथश्रीमहापादुकां पूजयामि नमः ॥

त्रिकोणे वामरेखायां—

४ उड्डीशानन्दनाथश्रीपादुकां पूजयामि नमः
४ प्रकाशानन्दनाथ ,,
४ विमर्शानन्दनाथ ,,
४ आनन्दानन्दनाथ ,,

पूर्वरेखायां

४ षष्ठीशानन्दनाथ ,,
४ ज्ञानानन्दनाथ ,,
४ सत्यानन्दनाथ ,,
४ पूर्णानन्दनाथ ,,

दक्षरेखायां—

४ मित्रेशानन्दनाथ ,,
४ स्वभावानन्दनाथ ,,
४ प्रतिमानन्दनाथ ,,
४ सुभगानन्दनाथ ,,

४ दिव्यौघसिद्धौघमानवौघेभ्यो नमः—इति पुष्पाञ्जलिः ।

दिव्यौघः—

४ परप्रकाशानन्दनाथश्रीपादुकां पूजयामि नमः
४ पराशिवानन्दनाथ ,,
४ पराशक्त्यम्बा ,,
४ कौलेश्वरानन्दनाथ ,,
४ शुक्लदेव्यम्बा ,,
४ कुलेश्वरानन्दनाथ ,,
४ कामेश्वर्यम्बा ,,

सिद्धौघः—

४ भोगानन्दनाथ ,,
४ क्लिन्नानन्दनाथ ,,
४ समयानन्दनाथ ,,
४ सहजानन्दनाथ ,,

मानवौघः—

४ गगनानन्दनाथ ,,
४ विश्वानन्दनाथ ,,
४ विमलानन्दनाथ ,,
४ मदनानन्दनाथ ,,
४ भुवनानन्दनाथ ,,
४ लीलाम्बा ,,
४ स्वात्मानन्दनाथ ,,
४ प्रियानन्दनाथ ,,

गुरुमण्डलार्चनम् ।

४ परौघेभ्यो नमः—इति विन्दुत्रिकोणयोः पुष्पाञ्जलि दत्त्वा विन्दौ महापादुकां यजेत् ॥ यथा—

४ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ह्स्रव्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः श्रीविद्यानन्दनाथात्मकचर्यानन्दनाथश्रीमहापादुकां पूजयामि नमः ॥

त्रिकोणे वामरेखायां—

४ उड्डीशानन्दनाथश्रीपादुकां पूजयामि नमः
४ प्रकाशानन्दनाथ 〃
४ विमर्शानन्दनाथ 〃
४ आनन्दानन्दनाथ 〃

पूर्वरेखायां

४ षष्ठीशानन्दनाथ 〃
४ ज्ञानानन्दनाथ 〃
४ सत्यानन्दनाथ 〃
४ पूर्णानन्दनाथ 〃

दक्षरेखायां—

४ मित्रेशानन्दनाथ 〃
४ स्वभावानन्दनाथ 〃
४ प्रतिभानन्दनाथ 〃
४ सुभगानन्दनाथ 〃

४ दिव्यौघसिद्धौघमानवौघेभ्यो नमः—इति पुष्पाञ्जलिः ।

दिव्यौघः—

४ परप्रकाशानन्दनाथश्रीपादुकां पूजयामि नमः
४ परशिवानन्दनाथ ,,
४ पराशक्त्यम्बा ,,
४ कौलेश्वरानन्दनाथ ,,
४ शुक्लदेव्यम्बा ,,
४ कुलेश्वरानन्दनाथ ,,
४ कामेश्वर्यम्बा ,,

सिद्धौघः—

४ भोगानन्दनाथ ,,
४ क्लिन्नानन्दनाथ ,,
४ समयानन्दनाथ ,,
४ सहजानन्दनाथ ,,

मानवौघः—

४ गगनानन्दनाथ ,,
४ विश्वानन्दनाथ ,,
४ विमलानन्दनाथ ,,
४ मदनानन्दनाथ ,,
४ भुवनानन्दनाथ ,,
४ लीलाम्बा ,,
४ स्वात्मानन्दनाथ ,,
४ प्रियानन्दनाथ ,,

ततः परमेष्ठिगुरुमन्त्रेण परमेष्ठिगुरुं, परमगुरुमन्त्रेण परमगुरुं, स्वगुरुमन्त्रेण स्वगुरुं च यजेत् ॥

४ अं आं सौः चतुरश्रत्रयात्मकत्रैलोक्यमोहनचक्राधिष्ठात्र्यै अणिमाद्यष्टाविंशतिशक्तिसहित—प्रकटयोगिनीमयूखावृत-त्रिपुराचक्रेश्वरीस्वरूपश्रीललितामहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि नमः

४ ऐं क्लीं सौः षोडशदळपद्मात्मकसर्वाशापरिपूरकचक्राधिष्ठात्र्यै कामाकर्षण्यादिषोडशशक्तिसहित—गुप्तयोगिनीमयूखावृत-त्रिपुरेशीचक्रेश्वरीस्वरूपश्रीललितामहात्रिपुरसुन्दरी०

४ ह्रीं क्लीं सौः अष्टदलपद्मात्मकसर्वसंक्षोभणचक्राधिष्ठात्र्यै अनङ्गकुसुमाद्यष्टशक्तिसहितगुप्ततरयोगिनीमयूखावृतत्रिपुर-सुन्दरीचक्रेश्वरीस्वरूपश्रीललिता०

४ हैं ह्क्लीं ह्सौः चतुर्दशारात्मकसर्वसौभाग्यदायकचक्राधि-ष्ठात्र्यै सर्वसंक्षोभिण्यादिचतुर्दशशक्तिसहितसंप्रदाययोगिनी-मयूखावृतत्रिपुरवासिनीचक्रेश्वरीस्वरूपश्रीललिता०

४ ह्सैं ह्स्क्लीं ह्स्सौः बहिर्दशारात्मकसर्वार्थसाधकचक्राधि-ष्ठात्र्यै सर्वसिद्धिप्रदादिदशशक्तिसहित—कुलोत्तीर्णयोगिनी-मयूखावृतत्रिपुराश्रीचक्रेश्वरीस्वरूपश्रीललिता०

४ ह्रीं क्लीं ब्लें अन्तर्दशारात्मकसर्वरक्षाकरचक्राधिष्ठात्र्यै सर्व-ज्ञादिदशशक्तिसहितनिगर्भयोगिनीमयूखावृतत्रिपुरमालिनी-चक्रेश्वरीस्वरूपश्रीललिता०

४ ह्रीं श्रीं सौः अष्टारात्मकसर्वरोगहरचक्राधिष्ठित—वशिन्याद्यष्टशक्तिसहितरहस्ययोगिनीमयूखावृतत्रिपुरासिद्धाचक्रेश्वरीस्वरूपश्रीललिता०

४ ह्स्रैं ह्स्क्लरीं ह्स्रौः त्रिकोणात्मकसर्वसिद्धिप्रदचक्राधिष्ठित—कामेश्वर्यादित्रिशक्तिसहितातिरहस्ययोगिनीमयूखावृतत्रिपुराम्बाचक्रेश्वरीस्वरूपश्रीललिता०

४ पञ्चदशी बिन्द्वात्मकसर्वानन्दमयचक्राधिष्ठित—षडङ्गायुधदशशक्तिसहितपरापरातिरहस्ययोगिनीमयूखावृतमहात्रिपुरसुन्दरीचक्रेश्वरीस्वरूपश्रीललिता०

लयाङ्गाद्यावरणान्तपूजास्थाने नमोऽन्तशुद्धशक्तिखड्गमालार्चनमपि कर्तुं शक्यम् ।

दण्डनाथानामानि ।

| | | | |
|---|---|---|---|
| ॐ पञ्चम्यै | नमः | ॐ पोत्रिण्यै | नमः |
| दण्डनाथायै | ,, | शिवायै | ,, |
| संकेतायै | ,, | वार्ताळ्यै | ,, |
| समयेश्वर्यै | ,, | महासेनायै | ,, |
| समयसंकेतायै | ,, | आज्ञाचक्रेश्वर्यै | ,, |
| वाराह्यै | ,, | अरिघ्न्यै | ,, |

मन्त्रिणीनामानि ।

| | | | |
|---|---|---|---|
| ॐ संगीतयोगिन्यै | नमः | ॐ श्यामळायै | ,, |
| श्यामायै | ,, | मन्त्रनायिकायै | ,, |

| | | | |
|---|---|---|---|
| ॐ मन्त्रिण्यै | नमः | ॐ मुद्रिण्यै | नमः |
| सचिवेशान्यै | ,, | प्रियकप्रियायै | ,, |
| प्रधानेश्यै | ,, | नीपप्रियायै | ,, |
| शुकप्रियायै | ,, | कदम्बेश्यै | ,, |
| वीणावत्यै | ,, | कदम्बवनवासिन्यै | ,, |
| वैणिक्यै | ,, | सदामदायै | ,, |

ललितानामानि ।

| | | | |
|---|---|---|---|
| ॐ सिंहासनेश्यै | नमः | ॐ कामेश्यै | नमः |
| ललितायै | ,, | परमेश्वर्यै | ,, |
| महाराज्ञ्यै | ,, | कामराजप्रियायै | ,, |
| वराङ्कुशायै | ,, | कामकोटिकायै | ,, |
| चापिन्यै | ,, | चक्रवर्तिन्यै | ,, |
| त्रिपुरायै | ,, | महाविद्यायै | ,, |
| महात्रिपुरसुन्दर्यै | ,, | शिवायै | ,, |
| सुन्दरीचक्रनाथायै | ,, | अनङ्गवल्लभायै | ,, |
| सम्राज्ञ्यै | ,, | सर्वपाटलायै | ,, |
| चक्रिण्यै | ,, | कुलनाथायै | ,, |
| चक्रेश्वर्यै | ,, | आम्नायनाथायै | ,, |
| महादेव्यै | ,, | सर्वाम्नायनिवासिन्यै | ,, |

ॐ शृङ्गारनायिकायै नमः ॥

अथ यथावकाशं सहस्रनामावल्यादिना अर्चनं कुर्यात् ।

धूपः ।

४ धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्वयं वयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममहूतमसि हविर्धानं दृꣳहस्व माह्वार्मित्रस्य त्वा चक्षुषा प्रेक्षे माभेर्मा संविक्था मा त्वा हिꣳसिषम् ।

ॐ श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः । धूपमाघ्रापयामि । धूपानन्तरं आचमनीयं समर्पयामि ॥

दीपः ।

४ उद्दीप्यस्व जातवेदोपघ्नन्निर्ऋतिं मम । पशूꣳश्च मह्यमावह जीवनं च दिशो दिश । मा नो हिꣳसीर्जातवेदो गामश्वं पुरुषं जगत् । अबिभ्रदग्न आगहि श्रिया मा परिपातय ।

ॐ श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः । दीपं दर्शयामि । दीपानन्तरं आचमनीयं समर्पयामि ॥

ततः सर्वसंक्षोभिण्यादिमुद्राः प्रदर्शयेत् ।

नैवेद्यम् ।

श्रीदेव्यग्रे चतुरश्रमण्डलं सामान्यार्घ्योदकेन विधाय तत्र आधारोपरि नैवेद्यं निधाय, मूलेन प्रोक्ष्य—

४ वं—इति धेनुमुद्रया अमृतीकृत्य—

४ मूलेन त्रिवारमभिमन्त्र्य—

ओं भूर्भुवस्सुवः+परिषिञ्चामि । अमृतोपस्तरणमसि—इति देव्यै आपोशनं दत्वा—

वामकरेण ग्रासमुद्रां दर्शयन्, दक्षकरेण प्राणादिपञ्चमुद्रा-प्रदर्शनपूर्वकं पञ्च प्राणाहुतीः कल्पयेत्। यथा—

४ ऐं प्राणाय स्वाहा।

४ क्लीं अपानाय स्वाहा।

४ सौः व्यानाय स्वाहा।

४ ऐं क्लीं उदानाय स्वाहा।

४ ऐं क्लीं सौः समानाय स्वाहा।

४ ब्रह्मणे स्वाहा।

४ चित्पात्रे सद्भविस्सौख्यं विविधानेकभक्षणम्।
निवेदयामि ते देवि सानुगायै जुषाण तत्॥

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। मधु नक्तमुतोषसि मधुमत्पार्थिवँ रजः। मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः।

इति पुष्पाञ्जलिं विन्यस्य नैवेद्यजातं तादात्म्येन समर्पयेत्।

४ श्रीललितायै अमृतपानीयं समर्पयामि।

४ अमृतापिधानमसि। इत्युत्तरापोशनं दत्वा—

४ श्रीललितायै हस्तप्रक्षालनं, गण्डूषं, पादप्रक्षालनं, आचमनीयं, कल्पयामि नमः।

ताम्रचलिपात्रे निवेदनसामग्रीः किंचित्किंचिदादाय निवेदनपात्राणि निर्गमय्य तत्स्थलं अस्त्रेण शोधयेत्।

ताम्बूलं—४ वनस्पतिदेवत्याय ताम्बूलाय नमः ।

इति सामान्यार्घ्योदकेन प्रोक्ष्य—

४ तमालदलकर्पूरपूगभागसमन्वितम् ।
एलापत्रसुसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥
४ श्रीललितायै ताम्बूलं कल्पयामि नमः ॥
४ ,, आनन्दोल्लासविलासहासं कल्पयामि नमः ॥

कर्पूरनीराजनम् ।

४ साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यम् ॥ ४ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥

४ राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे ।
समेकामांकामकामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु ।
कुबेराय वैश्रवणाय महाराजाय नमः ॥
४ श्रीललितायै कर्पूरनीराजनं कल्पयामि नमः ॥

मन्त्रपुष्पम् ।

योऽपां पुष्पं वेद । पुष्पवान् प्रजावान् पशुमान् भवति ।
चन्द्रमा वा अपां पुष्पम् । पुष्पवान् प्रजावान् पशुमान् भवति ।

शिवे शिवसुशीतलामृततरङ्गगन्धोल्लस-
न्नवावरणदेवते नवनवामृतस्पन्दिनि ।
गुरुक्रमपुरस्कृते गुणशरीरनित्योज्ज्वले
षडङ्गपरिवारिते कलित एष पुष्पाञ्जलिः ॥

श्रीललितामहात्रिपुरसुन्दर्यै नमः । पुष्पाञ्जलिं समर्पयामि ॥
४ श्रीललितायै छत्रं कल्पयामि नमः
,, चामरयुगलं ,,
,, दर्पणं ,,
,, तालवृन्तं ,,

बलिदानम् ।

देव्या दक्षभागे सामान्यार्घ्योदकेन त्रिकोणवृत्तचतुरश्रात्मकं मण्डलं परिकल्प्य—

४ ऐं व्यापकमण्डलाय नमः—इति गन्धाक्षतैरभ्यर्च्य—
अर्धभक्तपूरितोदकं बलिपात्रं तत्र विन्यस्य—
४ ओं ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहा—इति मन्त्रं त्रिः पठित्वा दक्षकरार्पितं वामकरतत्त्वमुद्रास्पृष्टं सलिलं बल्युपरि दत्वा वामपार्ष्णिघातकरास्फोटौ कुर्वाणः समुदञ्चितवक्त्रो बाणमुद्रया बलिं भूतैर्ग्रासितं विभाव्य योनिमुद्रया प्रणमेत् ॥

ततः पादौ प्रक्षाल्य, आचम्य प्रदक्षिणनमस्कारं कृत्वा यथाशक्ति जपमाचरेत् ॥

गुह्यातिगुह्यगोप्त्रि त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिरा ॥

इति जपं समर्पयेत् ॥

स्तोत्रम् ।

४ गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम् ॥

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥

षडङ्गदेवता नित्या दिव्याद्योघत्रयीगुरून् ।
नमाम्यायुधदेवीश्च शक्तीश्चावरणस्थिताः ॥
अमुकानन्दनाथाय मम श्रीगुरवे नमः ।
अमुकानन्दनाथाय गुरवे परमाय मे ।
अमुकानन्दनाथाय गुरवे परमेष्ठिने ॥
यदिदं श्रीगुरुस्तोत्रं स्वस्वरूपोपलक्षणम् ।
बालभावानुसारेण ममेदं हि विचेष्टितम् ।
मातृवात्सल्यसदृशं त्वया देवि विधीयताम् ॥

एवमादिभिः स्तुतिभिर्देवीं स्तुयात् ॥

पूजासमर्पण-देवतोद्वासने

साधु वाऽसाधु वा कर्म यद्यदाचरितं मया ।
तत्सर्वं कृपया देवि गृहाणाराधनं मम ॥

इति देव्या वामहस्ते पूजां समर्प्य, शङ्खमुद्धृत्य, देव्युपरि त्रिः परिभ्राम्य, तज्जलं हस्ते समादाय, सामयिकानात्मानं च मूलेन प्रोक्ष्य, शङ्खं प्रक्षाल्य निदध्यात् ।

ततो मूलेन तीर्थनिर्माल्ये स्वीकृत्य—

४ ज्ञानतोऽज्ञानतो वापि यन्मयाचरितं शिवे ।
तव कृत्यमिति ज्ञात्वा क्षमस्व परमेश्वरि ॥

इति क्षमाप्य खेचरीं बद्ध्वा—

४ हृत्पद्मकर्णिकामध्ये शिवेन सह शङ्करि ।
प्रविश त्वं महादेवि सर्वैरावरणैः सह ॥

इति तेजोरूपेण परिणतां श्रीदेवीं पूर्ववत् हृदयं नीत्वा, तत्र च मूर्तिं पञ्चोपचारैः संपूज्य, पुनः आत्माभिन्नसंविद्रूपेण भावयेत् ।

शान्तिस्तवः ।

४ संपूजकानां परिपालकानां
यतेन्द्रियाणां च तपोधनानाम् ।
देशस्य राष्ट्रस्य कुलस्य राज्ञां
करोतु शान्तिं भगवान् कुलेशः ॥

नन्दन्तु साधककुलान्यणिमादिसिद्धाः
शापाः पतन्तु समयद्विषि योगिनीनाम् ।
सा शाम्भवी स्फुरतु कापि ममाप्यवस्था
यस्यां गुरोश्चरणपङ्कजमेव लभ्यम् ॥

शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।
कालाग्न्यादि शिवान्तं च जगद्यज्ञेन तृप्यतु ॥

इति पूजाप्रकरणं समाप्तम् ॥



ॐ

श्रीगुरुभ्यो नमः ।

श्रीमहागणपतये नमः ।

श्रीललितामहात्रिपुरसुन्दर्यै नमः ।

# ॥ श्रीविद्यानित्याह्निकम् ॥

## तृतीयः खण्डः ।

### पुरश्चरणप्रकरणम् ।

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं बटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीरान्द्व्यष्ट चतुष्कषष्टिनवकं वीरावळीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् ।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥

गुरुपादुकामनुमुच्चार्य सुमुखादिपञ्चमुद्राः प्रदर्श्य गणपतिमूलेन महागणपतिं प्रणमेत् ।

अथ पूर्वाम्नायः ।

तत्र त्रैलोक्यमोहनसर्वाशापरिपूरकसर्वसंक्षोभणाख्ये सृष्टिचक्रे पूर्वाम्नायदेवतां मुक्तातपत्रच्छायायामुपविष्टां पद्मरागारुणां

मुक्ताभरणवस्त्रमाल्यानुलेपनां पाशाङ्कुशवराभयकरां रक्तमुकुटार्पितचन्द्रलेखां ध्यात्वा—

गुरुमण्डलम् ।

1. गुरुः—ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोहं, ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः, सहक्षमलवरयीं स्हौः, हंसः शिवः सोहं, स्वरूपनिरूपणहेतवे श्रीगुरवे नमः । अमुकानन्दनाथश्रीपादुकां पूजयामि नमः ॥

2. परमगुरुः—ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, सोहं हंसः शिवः, ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः, सहक्षमलवरयीं स्हौः, सोहं हंसः शिवः, स्वच्छप्रकाशविमर्शहेतवे श्रीपरमगुरवे नमः । अमुका-नन्दनाथश्रीपादुकां पूजयामि नमः ॥

3 परमेष्ठिगुरुः—ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोहं हंसः, ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः, सहक्षमलवरयीं स्हौः, हंसः शिवः सोहं हंसः, स्वात्मारामपञ्जरविलीनतेजसे श्रीपरमेष्ठिगुरवे नमः । अमुका-नन्दनाथश्रीपादुकां पूजयामि नमः ॥

4. गणपतिः—ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा । महागणपतिश्रीपा०

5. पीठत्रयं—

   1. ४ ऐं क्लीं सौः अं आं सौः कामगिरिपीठब्रह्मात्मशक्त्यै नमः । कामगिरिपीठब्रह्मात्मशक्तिश्रीपा०

ii. ४ ऐं ह्रीं श्रीं ऐं क्लीं सौः पूर्णगिरिपीठविष्ण्वात्मशक्त्यै नमः। पूर्णगिरिपीठविष्ण्वात्मशक्तिश्रीपा०

iii. ४ ऐं क्लीं सौः श्रीं ह्रीं ऐं जालन्धरपीठरुद्रात्मशक्त्यै नमः। जालन्धरपीठरुद्रात्मशक्तिश्रीपा०

देवताः।

6. शुद्धविद्या—४ ऐं ह्रीं औः। शुद्धविद्याम्बाश्री०

7. बाला—

४ ऐं क्लीं सौः सौः क्लीं ऐं। बालात्रिपुरसुन्दर्यम्बा०

8. द्वादशार्धा—

४ हसकलरडैं हसकलरडीं हसकलरडौः। द्वादशार्धाम्बा०

9. मतङ्गिनीमन्त्राः—

i. ४ ॐ ह्रीं हसन्ति हसितालापे मातङ्गि परिचारिके। मम भयविघ्नापदां नाशं कुरु कुरु ठ ठ हुं फट् स्वाहा। श्रीहसन्तीश्यामलाम्बाश्री०

ii. ४ ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति श्रीमातङ्गीश्वरि सर्वजनमनोहारि सर्वमुखरञ्जिनि क्लीं ह्रीं श्रीं सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरि सर्वदुष्टमृगवशंकरि सर्वसत्त्ववशंकरि सर्वलोकवशङ्करि राजानं मे वशमानय स्वाहा। सौः क्लीं ऐं श्रीं ह्रीं ऐं। श्रीराजश्यामलाम्बाश्री०

iii. ४ ओं नमो भगवते महाशुकाय त्रिभुवनालंकाराय राजमदमर्दनाय शीघ्रं राजानं मे वशमानय स्वाहा । श्रीशुकश्यामलाम्बाश्री०

iv. ४ ओं ऐं ओं नमो भगवति शां शारिके सकलकलाकोविदे विद्यां बोधय बोधय स्वाहा । श्रीशारिकाश्यामलाम्बा०

v. ४ ओं नमो भगवत्यै धीं वीणायै मम संगीतविद्यां प्रयच्छ स्वाहा । श्रीवीणाश्यामलाम्बा०

vi. ४ ओं नमो भगवते व्यं वेणवे मम साहित्यविद्यां प्रयच्छ स्वाहा । श्रीवेणुश्यामलाम्बा०

vii. ४ ऐं नमः उच्छिष्टचाण्डालि मातङ्गि सर्वजनवशंकरि स्वाहा । श्रीलघुश्यामलाम्बा०

10. गायत्री—

४ ओं भूर्भुवस्सुवः । तत्सवितुर्वरेण्यं + प्रचोदयात् । गायत्र्यम्बा०

11. गणपतिमन्त्राः—

i. ४ ओं श्रीं ह्रीं ग्लौं गणपतये सर्वकार्यसिद्धिं कुरु कुरु स्वाहा । क्षिप्रगणपति०

ii. ४ ओं श्रीं ह्रीं सर्वकार्यविघ्नप्रशमनाय सर्वराजवश्यकराय सर्वस्त्रीपुरुषाकर्षणाय सर्वलोकवशीकरणाय आं ह्रीं क्रों हुं फट् स्वाहा । सिद्धगणपति०

iii. ४ ओं ग्लौं नवनीतगणपतये सर्वजनान्मे वशमानय स्वाहा । नवनीतगणपति०

iv. ४ ओं श्रीं ह्रीं क्लीं ग्लौं ऐं वद वद वाग्वादिनि सिद्ध-गणपतये गीं भगवति स्वाहा । शक्तिगणपति०

v. ४ ओं हस्तिमुखाय लम्बोदराय उच्छिष्टाय महात्मने आं क्रो ह्रीं क्लीं ग्लौं गं घे घे उच्छिष्टाय स्वाहा । उच्छिष्टगणपति०

vi. ४ ओं गं ओं । एकाक्षरीगणपति०

12. कार्तिकेयमन्त्राः—

i. ४ ओं ऐं क्षं क्षं कुमाराय नमः । कुमारश्रीपा०

ii. ४ ओं ह्रीं श्रीं सं सुब्रह्मण्याय वैरिधैर्यं चलय चलय स्वाहा । सुब्रह्मण्य०

iii. ४ ओं ह्रीं श्रीं क्लीं सौः स्कन्दाय नमः । स्कन्द०

13. मृत्युंजयमनुः—४ ओं हौं जुं सः । मृत्युंजय०

14. नीलकण्ठमनुः—४ ओं प्रों श्रीं ठः । नीलकण्ठ०

15. त्र्यम्बकमनुः—

४ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुक-मिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । त्र्यम्बक०

16. जातवेदोमनुः—

४ ओं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय साधय स्वाहा । जातवेद०

17. प्रत्यङ्गिरामनुः—

i. ४ ओं आं ह्रीं क्रों ओं नमः कृष्णवसने सिंहवदने महाभैरवि ज्वलज्ज्वालाजिह्वे कराळवदने प्रत्यङ्गिरे क्ष्म्रों। ओं नमो नारायणाय। घृणिस्सूर्य आदित्यों। सहस्रार हुं फट्। अंव ब्रह्मद्विषो जहि। ब्राह्मीप्रत्यङ्गिरा०

ii. ४ ओं ह्रीं खें फें भक्षज्वालाजिह्वे कराळवदने काळरात्रि प्रत्यङ्गिरे क्षों क्ष्म्रौं ह्रीं नमस्तुभ्यं हन हन, मां रक्ष रक्ष, मम शत्रून् भक्षय भक्षय हुं फट् स्वाहा। नारायणीप्रत्यङ्गिरा०

iii. ४ श्रीं ह्रीं ओं नमः कृष्णवसने सहस्रसिंहिनि सहस्रवदने काळरात्रि प्रत्यङ्गिरे परसैन्यपरकर्मविध्वंसिनि परमन्त्रोत्सादिनि सर्वभूतदमनि सर्वदेहान्बन्ध बन्ध सर्वविद्यां छिन्धि छिन्धि, क्षोभय क्षोभय परतन्त्राणि स्फोटय स्फोटय सर्वशृङ्खलान् त्रोटय त्रोटय ज्वलज्ज्वालाजिह्वे कराळवदने प्रत्यङ्गिरे ह्रीं नमः। रौद्रीप्रत्यङ्गिरा०

iv. ४ यां कल्पयन्ति नोऽरयः क्रूरां कृत्यां वधूमिव। तां ब्रह्मणापन्निर्णुद्मः प्रत्यक्कर्तारमृच्छतु ॥ उग्रकृत्याप्रत्यङ्गिरा०

v. ४ ज्वलज्ज्वालाजिह्वे कराळदंष्ट्रे प्रत्यङ्गिरे क्षीं ह्रीं हुं फट्। अथर्वणभद्रकालीप्रत्यङ्गिरा०

18. ४ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् । अकाररूपाय सृष्टिकर्त्रे ब्रह्मणे नमः । ब्रह्म०
19. ४ ह्स्रैं ह्स्क्ल्रीं ह्स्रौः । पूर्वाम्नायसमयविद्येश्वर्युन्मोदिनीदेव्यम्बा०
20. ४ मूलं गुरुत्रयगणपतिपीठत्रयसहितायै शुद्धविद्यादिसमयविद्येश्वरीपर्यन्तचतुर्विंशतिसहस्रदेवतापरिसेवितायै कामगिरिपीठस्थितायै पूर्वाम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः । श्रीमहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि नमः ॥

इति पूर्वाम्नायः ।

---

अथ दक्षिणाम्नायः ।

चतुर्दशारद्विदशारात्मके स्थितिचक्रे दक्षिणाम्नायदेवतामुद्यत्सूर्यसहस्राभां नानालंकारभूषितां रक्तवस्त्रानुलेपनां वामादूर्ध्वयोस्तदाधधःस्थयोः करयोः पाशाङ्कुशपुस्तकाक्षमालाधरां ध्यात्वा—

गुरुमण्डलम् ।

1. भैरव :—
   i. ४ फ्रें फट् फां फीं ह्रीं श्रीं महामन्थानभैरवश्रीपा०
   ii. ४ ,, ,, खचक्रभैरव०
   iii. ४ ,, ,, फट्कारभैरव०
   iv. ४ ,, ,, एकात्मानन्दभैरव०

v. ४ फें फट् फां फीं ह्रीं श्रीं रविभक्षणभैरवश्रीपा०
vi ४ „ „ चण्डभैरव०
vii. ४ „ „ नभोनिर्मलभैरव०
viii ४ „ „ डमरभास्करभैरव०

2 सिद्धौघः—

i. ४ ह्रीं श्रीं सौः आं महादुर्मनाम्बासिद्धश्रीपा०
ii ४ „ सुन्दर्यम्बासिद्ध०
iii ४ „ विश्वदळनाम्बासिद्ध०
iv ४ „ कपालिकाम्बासिद्ध०
v ४ „ वडवाम्बासिद्ध०
vi ४ „ भीमाम्बासिद्ध०
vii ४ „ कराळ्यम्बासिद्ध०
viii ४ „ खराननाम्बासिद्ध०
ix ४ „ शालिनाम्बासिद्ध०

3 वटुत्रय—

i ४ ओं ह्रीं श्रीं हुं फट् स्कन्दवटुकश्रीपा०
ii ४ „ „ चित्रवटुक०
iii ४ „ „ विरिञ्चिवटुक०

4 पदयुगं—

i ४ हसकलह्रीं हसकहलह्रीं सकलह्रीं । प्रकाशपादुकाश्री०
ii ४ हसकल हसकहल सकलह्रीं । विमर्शपादुकाश्री०

देवता ।

5 सौभाग्यविद्या—

४ ऐं क-५ क्लीं ह-६ सौः स-४ । सौभाग्यविद्याम्बा०

6 बगलामनुः —

४ ओं ह्लीं बगळामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ओं स्वाहा । बगळामुखी०

7. वाराहीमनुः —

४ ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि अन्धे अन्धिनि नमः । रुन्धे रुन्धिनि नमः । जम्भे जम्भिनि नमः । मोहे मोहिनि नमः । स्तम्भे स्तम्भिनि नमः । सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्य ऐं ग्लौं ठः ठः ठः ठः हुं अस्त्राय फट् । श्रीवाराह्यम्बा०

8 वटुकमनुः —

४ ओं ह्रीं वं वटुकाय आपदुद्धारणं कुरु कुरु वं वटुकाय ह्रीं ओं स्वाहा । आपदुद्धारणवटुक०

9 तिरस्करिणीमनुः —

४ ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति तिरस्करणि महामाये महानिद्रे सकलपशुजनमनश्चक्षुश्श्रोत्रतिरस्करणं कुरु कुरु स्वाहा सौः क्लीं ऐं श्रीं ह्रीं ऐं । तिरस्करण्यम्बा०

10. महामाया—४ ॐ ह्रीं ईं ॐ नमो भगवति महामाये मनोमये जगत्क्षोभिणि वर वरदे सर्वजनं मोहय मोहय ईं ह्रीं ॐ स्वाहा। श्रीमहामाया०

11. अघोरमनुः —

४ ह्रां ह्रीं ह्रूं अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः। ह्रूं ह्रीं ह्रः अघोराय स्वाहा। अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः स्वाहा। कं कं हं क्षं सं हं भ्रीं भ्रीं प्रत्यक्ष प्रत्यक्ष ह्रूं ह्रीं ह्रां सं हुं फट् स्वाहा। अघोर०

12. शरभमनुः —

I. ४ ॐ नमो भगवते प्रळयकालाग्निरुद्राय दक्षाध्वरध्वंसकाय महाशरभाय मम शत्रुच्छेदनं कुरु कुरु स्वाहा। श्रीशरभेश्वर०

II ४ खें खां खं फट् प्राणग्रहसि प्राणग्रहसि हुं फट्। सर्वशत्रुसंहारकाय शरभसाल्वाय पक्षिराजाय हुं फट् स्वाहा। शरभेश्वरी०

13 भेतालमनुः—४ छ्रां छ्रीं छ्रूं छ्रैं छ्रौं छ्रः ऐं ह्रीं क्लीं झ्रां परेतभूताधिपतये महापिशाचकापालाय झ्रां झोटिंगदमनाय अधिपाय भो भो भेताळाय तुभ्यं नमस्स्वाहा। भेताळ०

14. खड्गरावणमनुः—४ ओं ह्रूं क्रीं खं भूतेश ह्रीं ह्रूं खड्गरावणाय नमः । खड्गरावण०

15. वीरभद्रमनुः —

४ ओं क्लीं श्रीं वीरभद्र जय जय नमः स्वाहा । वीरभद्र०

16. रौद्रमनुः—४ ॐ नमो भगवते रुद्राय । रुद्र०

17. शास्तृमनुः —

४ ह्रीं हरिहरपुत्राय पुत्रलाभाय शत्रुनाशनाय मदगजवाहनाय महाशास्त्रे प्रत्यक्षवेलायुधाय वर वरद सर्वजनं मे वशमानय स्वाहा । श्रीशास्तृ०

18. पाशुपतास्त्रमनुः—

४ ओं श्लीं पशु हुं फट् । पाशुपतास्त्र०

19. ब्रह्मास्त्रमनुः —

४ ओं आं ह्लीं क्रों ग्लौं हुं ऐं क्लीं ह्रीं श्रीं बगलामुखि आवेशयावेशय आं ह्लीं क्रों ब्रह्मास्त्ररूपिणि एह्येहि आं ह्लीं क्रों मम हृदये आवहावह संनिधिं कुरु कुरु आं ह्लीं क्रों मम हृदये सुखं चिरं तिष्ठ तिष्ठ आं ह्लीं क्रों हुं फट् स्वाहा । ब्रह्मास्त्र०

20. वायव्यास्त्रमनुः—

४ आवायव्ययावायव्या व्यायवाया व्ययवाआ । औवायव्ययावायव्या व्यायवायाव्ययवौऔ । ओं हन हन हुं फट् स्वाहा । वायव्यास्त्र०

21. भैरवमन्त्राः —

i. ४ ॐ नमो भगवते उग्रभैरवाय सर्वविघ्ननाशाय नाशय हुं फट् स्वाहा। उग्रभैरव०

ii. ४ ओं ह्रीं आं अङ्गभैरव (देवदत्त) कोपशमनं कुरु कुरु स्वाहा। अङ्गभैरव०

iii. ४ ह्रू ह्रीं क्लीं अघोरभैरवाय (देवदत्तं) मोहय स्वाहा। अघोरभैरव०

iv. ४ ओं नमो भगवते महाभीमभैरवाय लोकभयङ्कराय सर्वशत्रुसंहारकाय हुं (देवदत्तं) ध्वंसय ध्वंसय स्वाहा। भीमभैरव०

v. ४ वं रं ह्रूं ओं नमो भगवते विजयभैरवाय सर्वशत्रु-विनाशनाय विबुधवाहनाय नररुधिरमांसभक्षणाय (देवदत्तं) उच्चाटयोच्चाटय हुं ताडय ताडय भस्मीकुरु भस्मीकुरु स्वाहा। विजयभैरव०

vi. ४ ॐ ह्रीं स्रां रक्तभैरवाय शवकपालमालालंकृताय नवाम्बुदश्यामाय एह्येहि शीघ्रं एहि मां पाहि एं ऐं आगामिकार्यं वद वद अखिलोपाधिं हर हर सौभाग्यं देहि मे स्वाहा। रक्तभैरव०

vii. ४ ॐ श्रीं ह्रीं क्लीं ॐ नमो भगवते स्वर्णाकर्षण-भैरवाय प्रणताभीष्टपरिपूरणाय एह्येहि करुणानिधे मह्यं हिरण्यं दापय दापय शीघ्रं दापय दापय श्रीं ह्रीं क्लीं स्वाहा। स्वर्णाकर्षणभैरव०

22 दक्षिणामूर्तिमन्त्राः—

i. ४ ओं नमो भगवते दक्षिणामूर्तये मह्य मेधां प्रज्ञां प्रयच्छ स्वाहा । मेधादक्षिणामूर्ति०

ii ४ ओं नमो भगवते दक्षिणामूर्तये मह्य श्रियं प्रज्ञां प्रयच्छ स्वाहा । लक्ष्मीदक्षिणामूर्ति०

iii ४ ओं अः नमःशिवाय अः ओं । कीर्तिदक्षिणामूर्ति०

iv ४ ओं ज्ञां नमश्चिन्मयमूर्तये ज्ञानं देहि स्वाहा । ज्ञानदक्षिणामूर्ति०

v ४ ओं श्रीं सौः श्रीसाम्बशिवाय तुभ्यं स्वाहा । साम्बदक्षिणामूर्ति०

vi ४ ओं ह्रीं ओं दक्षिणामूर्तये सर्वसाध्यमेधां समुत्कर्पय स्वाहा । वीरदक्षिणामूर्ति०

vii ४ ओंकारसहारमूर्तये नमः । संहारदक्षिणामूर्ति०

viii ४ ओं नमो भगवते दक्षिणामूर्तये त्रिणेत्राय त्रिकाल॰ ज्ञानाय सर्वशत्रुघ्नाय सर्वापस्मारविदारणाय दारय दारय मारय मारय भस्मीकुरु भस्मीकुरु एह्येहि हुं फट् । अपस्मारनिवर्तकदक्षिणामूर्ति०

23 ४ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ उकाररूपाय स्थितिकर्त्रे विष्णवे नमः । विष्णुश्री०

24. ४ आं ह्रीं ऐं क्लिन्ने क्लिन्नमदद्रवे कुले ह्सौः । दक्षिणाम्नायसमयविद्येश्वरीभोगिनीदेव्यम्बा०

४ मूलं भैरवाष्टकनवसिद्धौघवटुकत्रयपदयुगसहितायै सौभाग्यविद्यादिसमयविद्येश्वरीपर्यन्तत्रिंशत्सहस्रदेवतापरिसेवितायै पूर्णगिरिपीठस्थितायै दक्षिणाम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः । श्रीमहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि नमः ॥

इति दक्षिणाम्नायः ।

---

अथ पश्चिमाम्नायः ।

नवयोनिचक्रे सहस्राराख्ये पश्चिमाम्नायाधिदेवतां पञ्चमुण्डासनां बालार्कसहस्रप्रभां मुण्डमालाधरां रक्तवस्त्राभरणानुलेपनां वामाधूर्ध्वतदाद्यधः पाशाङ्कुशाभयवरकरां त्रिणेत्रां ध्यात्वा—

गुरुमण्डलम् ।

1. दूत्यः —

i. ४ अं आं सौः ह्रीं श्रीं सौः योन्यम्बादूतीश्रीपा०

ii. ४ ,, ,, योनिसिद्धनाथाम्बादूती०

iii. ४ ,, ,, महायोन्यम्बादूती० [दूती०

iv. ४ ,, ,, महायोनिसिद्धनाथाम्बा-

v ४ अं आं सौः ह्रीं श्रीं सौः दिव्ययोन्यम्बादूती०
vi ४ ,, ,, दिव्ययोनिसिद्धनाथाम्बा-
vii ४ ,, ,, शङ्खयोन्यम्बादूती० [दूती०
viii ४ ,, ,, शङ्खयोनिसिद्धनाथाम्बा-
ix ४ ,, ,, पद्मयोन्यम्बादूती० [दूती०
x ४ ,, ,, पद्मयोनिसिद्धनाथाम्बादूती०

2 मण्डल—

i ४ ह्रीं श्रीं ऐं ह्रीं श्रीं क्लीं ह्रीं श्रीं सौः वह्निमण्डल०
ii ४ ,, ,, ,, सूर्यमण्डल०
iii ४ ,, ,, ,, सोममण्डल०

3 वीराष्टकं—

i. ४ ह्रीं श्रीं फट् फां फें सृष्टिवीरभैरवश्री०
ii ४ ,, ,, स्थितिवीरभैरव०
iii ४ ,, ,, संहारवीरभैरव०
iv ४ ,, ,, रक्तवीरभैरव०
v ४ ,, ,, यमवीरभैरव०
vi ४ ,, ,, मृत्युवीरभैरव०
vii ४ ,, ,, भद्रवीरभैरव०
viii ४ ,, ,, परमार्कवीरभैरव०
ix. ४ ,, ,, मार्ताण्डवीरभैरव०
x ४ ,, ,, कालाग्निरुद्रभैरव०

4. चतुःषष्टिसिद्धाः —

४ ऐं ह्रीं श्रीं क्लीं श्रीं ह्रीं सौः श्रीं ह्रीं मङ्गळानाथश्रीपा०

४-९ चौण्डिकानाथ०
ज्येष्ठानाथ०
कन्तुकिनाथ०
पटहानाथ०
कूर्मानाथ०
घनदानाथ०
गन्धानाथ०
गगनानाथ०
मतङ्गानाथ०
चम्पकानाथ०
कैवर्तानाथ०
मातङ्गगमनानाथ०
सूर्यभक्षानाथ०
नभोभक्षानाथ०
सौतिकानाथ०
रूपिकानाथ०
दंष्ट्रानाथ०
धूम्राक्षानाथ०
ज्वालानाथ०
गान्धारानाथ०

४-९ गगनेश्वरानाथ०
मायानाथ०
महामायानाथ०
नित्यानाथ०
शान्तानाथ
विश्वानाथ०
कामानाथ०
उमानाथ०
श्रियानाथ०
सुभगानाथ०
विद्यानाथ०
महाविद्यानाथ०
अमृतानाथ०
चन्द्रानाथ०
अन्तरिक्षानाथ०
सिद्धानाथ०
श्रद्धानाथ०
अनन्तानाथ०
शम्बरानाथ०
उल्कानाथ०

| | |
|---|---|
| ४-९ त्रैलोक्यानाथ० | ४-९ कालानाथ० |
| भीमानाथ० | महाकालानाथ० |
| राक्षसीनाथ० | अभयानाथ० |
| मलिनानाथ० | विकारानाथ० |
| प्रचण्डानाथ० | महाविकारानाथ० |
| अनङ्गानाथ० | सर्वगानाथ० |
| त्रिविधानाथ० | सृगालानाथ० |
| अनभिहितानाथ० | पूतनानाथ० |
| नन्दिनाथ० | शर्वरीनाथ० |
| महामनानाथ० | व्योमानाथ० |
| सुन्दरानाथ० | पूर्णानाथ० |
| विश्वेश्वरानाथ० | [चतुःषष्टिनाथ०] |

देवताः ।

5. लोपामुद्रामनुः —
४ हसकलह्रीं हसकहलह्रीं सकलह्रीं । लोपामुद्राम्बाश्री०

6. भुवनेश्वरीमनुः —४ श्रीं ह्रीं श्रीं । भुवनेश्वर्यम्बा०

7. अन्नपूर्णामनुः —४ ह्रीं श्रीं क्लीं ॐ नमो भगवत्यन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा । अन्नपूर्णाम्बा०

8. कामकलामनुः —४ अं आं + + ळं क्षं ईं । कामकलाम्बा०

9. सुदर्शनमनुः — i. ४ ओं सहस्रार हुं फट् । सुदर्शन०
ii. ४ श्रीं ह्रीं ॐ सुदर्शनचक्राय रिपुचित्तं भ्रामय भ्रामय स्वाहा । सुदर्शन०

सर्वेश्वरी च मे रक्षां कुरुतां कौलिनी तथा ।
वाग्देव्यो वरदाः सन्तु सर्वास्तुष्यन्तु पूजिताः ॥ १२६ ॥
अष्टकोणान्तरे वाण्यो रक्षां कुर्वन्तु सर्वदा ।

सर्वसिद्धिप्रदं चक्रमष्टमं परिरक्षतु ॥ १२७ ॥
अष्टकोणान्तरस्थाने त्रिकोणे बहिरायुधाः ।
श्रीमत्पाशाङ्कुशधनुर्बाणाश्चायुधदेवताः ॥ १२८ ॥
षडङ्गदेवताः पान्तु अङ्गस्थाश्चाङ्गदेवताः ।
महादेव्याश्चक्रसंस्था रक्षां कुर्वन्तु सर्वदा ॥ १२९ ॥

श्रीमत्त्रिकोणमध्ये तु तत्र कोणत्रयेषु च ।
मध्ये च सर्वदा पान्तु चतस्रः पीठदेवताः ॥ १३० ॥
कामे कामेश्वरी पातु पूर्णे वज्रेश्वरी तथा ।
जालन्धरे महापीठे पातु मां भगमालिनी ॥ १३१ ॥
ओड्याणके महापीठे महात्रिपुरसुन्दरी ।

सर्वानन्दमयं चक्रं नवमं परिरक्षतु ॥ १३२ ॥
सूर्येन्दुवह्निपीठे तु बिन्दुचक्रनिवासिनी ।
ब्रह्मस्वरूपिणी पातु श्रीमत्त्रिपुरसुन्दरी ॥ १३३ ॥
योनिमध्ये तु परितो नित्याषोडशशक्तयः ।
देव्याः श्रीचक्रमध्यस्था रक्षां कुर्वन्तु सर्वदा ॥ १३४ ॥

त्रैलोक्यमोहने चक्रे चतुरश्रे सुशोभने ।
पातु मामनिशं देवी त्रिपुरा परमेश्वरी ॥ १३५ ॥

कुलसुन्दरी मां पातु नित्यानित्या च पातु माम् ।
नित्या नीलपताका च विजया पातु सर्वदा ॥ १४६ ॥

श्रीसर्वमङ्गळा पातु नित्या ज्वालांशुमालिनी ।
विचित्रा सर्वदा पातु षोडशी पातु सुन्दरी ॥ १४७ ॥

षोडशी प्रथमा नित्या त्रिपञ्चतिथिगामिनी ।
अनुलोमविलोमेन श्रीमत्रिपुरसुन्दरी ॥ १४८ ॥

महाविद्या तुरीया तु पातु मां बहुरूपिणी ।
महासप्तदशी नित्या नित्यमानन्दरूपिणी ॥ १४९ ॥

पूर्वं दक्षिणपश्चाच्च उत्तरोर्ध्वमनुत्तमम् ।
बौद्धवैदिकशैवाश्च सौरवैष्णवशाक्तकाः ॥ १५० ॥

सृष्टिस्थितिलयाख्यानां वासो रक्षतु सर्वदा ।
चतस्रः समयादेव्यो योगिन्यः पान्तु सर्वदा ॥ १५१ ॥

चतुरश्रे महाचक्रे तारा मां परिरक्षतु ।
डाकिनी राकिणी पातु लाकिनी काकिनी तथा ॥
साकिनी हाकिनी पातु याकिनी सर्वरूपिणी ॥ १५२ ॥

वर्णस्था मातृकाः सर्वा देहस्था मातृकाश्च याः ।
रक्षां कुर्वन्तु ताः सर्वाश्चक्रराजे तु पूजिताः ॥ १५३ ॥

श्रीचक्रे पूजिता या याः पूजिता या न पूजिताः ।
सर्वास्ताः पूजिताः सन्तु श्रीमत्रिपुरसुन्दरी ॥ १५४ ॥

चतुरश्रे महाचक्रे बुद्धो मां परिरक्षतु ।
पातु मामनिशं देवः षोडशारे प्रजापतिः ॥ १५५ ॥

तथाष्टदळचक्रे तु शिवो मां परिरक्षतु ।
चतुर्दशारचक्रे तु भास्करो रक्षयेत्सदा ॥ १५६ ॥

द्विदशारे तथा पातु प्रभुर्नारायणो हरिः ।
अष्टारे मध्यचक्रे तु पातु मां भुवनेश्वरी ॥ १५७ ॥

अष्टारान्तस्त्रिकोणे तु काळिका पातु सर्वदा ।
त्रिकोणान्तरचक्रे तु पातु कात्यायनी च माम् ॥ १५८ ॥

नवचक्रेश्वरी नित्या या नित्या परमा कला ।
पातु मामनिशं देवी श्रीमत्त्रिपुरसुन्दरी ॥ १५९ ॥

महात्रिपुरसुन्दार्याश्चिन्तनीया च या परा ।
ब्रह्मस्वरूपिणी पातु पञ्चमी परदेवता ॥ १६० ॥

पञ्चमी पातु सततं नित्यं रक्षतु पञ्चमी ।
शान्तिं करोतु सा नित्या पञ्चमी परदेवता ॥ १६१ ॥

सा पुनः पञ्चमी शक्तिर्नित्यचैतन्यरूपिणी ।
कारणानन्दमध्यस्था पातु मां पञ्चमी सदा ॥ १६२ ॥

पञ्चतत्त्वं तथा पञ्च यत्किञ्चित् पञ्चमं स्मृतम् ।
नित्यं पञ्चगुणैः पातु पञ्चमी परदेवता ॥ १६३ ॥

पञ्चपञ्चाक्षरैर्मन्त्रैः पञ्चकूटैश्च पञ्चभिः ।
पञ्चमी पातु सततं नित्यं रक्षतु पञ्चमी ॥ १६४ ॥

श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च ।
त्रिशक्तिः सर्वसाम्राज्यलक्ष्मीः पञ्च प्रकीर्तिताः ॥ १६५ ॥

श्रीविद्या च परंज्योतिः परा निष्कळशाम्भवी ।
अजपा मातृका चेति पञ्च कोशाः प्रकीर्तिताः ॥ १६६ ॥

श्रीविद्या त्वरिता चैव पारिजातेश्वरी तथा ।
त्रिपुटा पञ्चबाणेशी पञ्चकल्पलताः स्मृताः ॥ १६७ ॥

श्रीविद्याऽमृतपीठेशी सुधासूरमृतेश्वरी ।
अन्नपूर्णेति विख्याताः पञ्च कामदुघाः स्मृताः ॥ १६८ ॥

श्रीविद्या सिद्धलक्ष्मीश्च मातङ्गी भुवनेश्वरी ।
वाराही पञ्चरत्नानामीश्वर्यश्च प्रकीर्तिताः ॥ १६९ ॥

गणेशो वटुकश्चैव क्षेत्रेशो योगिनीगणाः ।
तर्पिता बलिपात्राणि सर्वे रक्षन्तु पूजिताः ॥ १७० ॥

ऐशान्यां सर्वदा पातु नित्यं निर्माल्यवासिनी ।
शेषिका सुन्दरी पातु बिन्दुचक्रनिवासिनी ॥ १७१ ॥

नित्यं कामकला पातु मुद्रा मां पातु खेचरी ।
शक्तिर्मां सर्वदा पातु या मूलाधारवासिनी ॥ १७२ ॥

मुद्रामन्त्रोपचारैस्तु समस्ता देवताश्च याः ।
ताः श्रीश्च पूजिता चास्तु श्रीमत्त्रिपुरसुन्दरी ॥ १७३ ॥

श्रीमत्त्रिपुरसुन्दर्याः स्तवराजं मनोहरम् ।
पूजाक्रमेण कथितं साधकानां सुखावहम् ॥ १७४ ॥

क्रमेणानेन विधिना श्रीमत्त्रिपुरसुन्दरीम् ।
संपूज्य साधकश्रेष्ठो रक्षामन्त्रं सदा पठेत् ॥ १७५ ॥

प्रातःकाले शुचिर्भूत्वा निशायामर्धरात्रके ।
अथवा संकटे प्राप्ते राजस्थाने सुदुर्गमे ॥ १७६ ॥

जले वाऽथ स्थले वापि श्मशाने दुर्गमे गिरौ ।
यत्र यत्र भये प्राप्ते स तत्रैव पठेन्नरः ॥ १७७ ॥

सर्वावयवभावेन देवीं संचिन्त्य साधकः ।
रक्षां कुर्वीत यत्नेन सर्वाशुभविनाशिनीम् ॥ १७८ ॥

स्तोत्रं चाद्भुतमेवेदं त्रैलोक्ये चापि दुर्लभम् ।
गोपनीयं प्रयत्नेन यदीच्छेदात्मनो हितम् ॥ १७९ ॥

यस्मै कस्मै न दातव्यं न वक्तव्यं कदाचन ।
शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत् ॥ १८० ॥

भ्रष्टेभ्यः साधकेभ्योऽपि बान्धवेभ्यो न दर्शयेत् ।
दत्ते च सिद्धिहानिः स्यादित्याज्ञा शांकरी कृता ॥१८१॥

मन्त्राः पराङ्मुखा यान्ति क्रुद्धा भवति सुन्दरी ।
अशुभं च भवेत्तस्य तस्माद्यत्नेन गोपयेत् ॥ १८२ ॥

यद्गृहे विद्यते स्तोत्रं ग्रन्थे लिखितमुत्तमम् ।
चञ्चलापि स्थिरा भूत्वा कमला तत्र तिष्ठति ॥ १८३ ॥

तस्माद्यत्नादिमं ग्रन्थं पूजयेद्गन्धपुष्पकैः ।
पूजाफलं लभेन्नित्यं सुन्दरीसंनिधिर्भवेत् ॥ १८४ ॥

स्तवराजमिमं पुण्यं यः पठेत्सुसमाहितः ।
यत्फलं लभते तस्माच्छृणुध्वं साधकोत्तमाः ॥ १८५ ॥

वारमेकं तु योऽधीयात् स पूजाफलमश्नुते ।
वेदिता मातृचक्रस्य साधको भुवि जायते ॥ १८६ ॥

मासमेतत्क्रमेणैव पठेद्भक्तिपरायणः ।
स्वर्गेऽपि विदितो भूत्वा देवीभक्तस्तु भूतले ॥ १८७ ॥

भक्त्या च धारयेद्यस्तु लिखित्वा स्तोत्रमुत्तमम् ।
शिखायामथवा कण्ठे बाहौ वा भक्तिसंयुतः ॥ १८८ ॥

स भवेत्साधकश्रेष्ठो मातॄणां च सदा प्रियः ।
लभते सर्वकामान्वै पर स्वस्त्ययनं भवेत् ॥ १८९ ॥

तस्मादिदं प्रयत्नेन धारयेद्विधिना तथा ।
पठित्वा पूजयित्वा च त्रैलोक्यं वशमानयेत् ॥ १९० ॥

भक्ताय ददते तस्मै मन्त्रं रक्षाकरं परम् ।
धृत्वा सौवर्णमध्यस्थां सर्वकामाञ्नरो लभेत् ॥ १९१ ॥

यानि वाञ्छति कामानि भुक्तिमुक्तिकराणि च ।
लभते नात्र संदेहो भुवि स्वर्गे रसातले ॥ १९२ ॥

दृष्ट्वा च साधकश्रेष्ठं ग्रहराक्षसहिंसकाः ।
दूरादेव पलायन्ते न समर्थाश्च हिंसितुम् ॥ १९३ ॥

विषं निर्विषतां याति पापं निर्याति संक्षयम् ।
देववन्मानवो भूत्वा भुनक्ति बहुलं सुखम् ॥ १९४ ॥

तस्मान्नित्यं पठेद्धीमान्मुक्तिकामार्थसिद्धये ।
भक्त्या च धारयेद्देवीं स्वरक्षां सर्वदाचरेत् ॥ १९५ ॥

पूर्वजातिपरिज्ञानवेद्यं जन्मसहस्रकम् ।
न पुनर्जायते योनौ मरणं नास्ति चापरम् ॥ १९६ ॥

गन्धर्वरूपवान् भूत्वा संपूज्य परमेश्वरीम् ।
रक्षामन्त्रं पठित्वा च देवत्वं लभते ध्रुवम् ॥ १९७ ॥

अपुत्रो लभते पुत्रं दरिद्रो लभते धनम् ।
यं यं चापि स्मरेन्नित्यं तं तमाप्नोति निश्चितम् ॥ १९८ ॥

अतिदुःखालये कष्टे भीमे निगळबन्धने ।
सकृत्पाठे कृते नित्यं निगळान्मुच्यते ध्रुवम् ॥ १९९ ॥

दुष्कृतैरभिचारैश्च रोगैर्यक्ष्मादिभिश्च यः ।
परप्रयुक्तैर्ग्रस्तोऽपि पठनान्मुच्यते नरः ॥ २०० ॥

इमं त्रिपुरसुन्दर्याः स्तवराजं मनोहरम् ।
रक्षामन्त्रं च शुभदं शिवेन परिकीर्तितम् ।
यः पठेत्प्रयतो भक्त्या सद्यो रोगात्स मुच्यते ॥ २०१ ॥

आयुरारोग्यमैश्वर्यं भुक्तिं मुक्तिं च विन्दति ।
सर्वान्कामानवाप्नोति देवेन्द्रस्यापि दुर्लभान् ॥ २०२ ॥

इति श्रीरुद्रयामळे त्रिपुरास्तवराजः समाप्तः ।

# गुरुपादुकापञ्चकम् ।

—:o:—

ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीविवरकाण्डमण्डितं द्वादशार्णसरसीरुहं भजे ॥ १ ॥

तस्य कन्दलितकर्णिकापुटे क्लृप्तरेखमकथादिरेखया ।
कोणलक्षितहलक्षमण्डलीभावलक्ष्यमबलालयं भजे ॥ २ ॥

तत्पुटे पटुतटित्कडारिमस्पर्धमानमणिपाटलप्रभम् ।
चिन्तयामि हृदि चिन्मयं वपुर्नादबिन्दुमणिपीठमण्डलम् ॥ ३ ॥

ऊर्ध्वमस्य हुतभुक्शिखात्रयं तद्विलासपरिबृंहणास्पदम् ।
विश्वघस्मरमहोच्छिदोत्कटं व्यामृशामि युगमादिहंसयोः ॥ ४ ॥

तत्र नाथचरणारविन्दयोः कुङ्कुमासवझरीमरन्दयोः ।
द्वन्द्वमिन्दुमकरन्दशीतलं मानसं स्मरति मङ्गलास्पदम् ॥ ५ ॥

निषक्तमणिपादुकानियमिताघकोलाहलं
स्फुरत्किसलयारुणं नखसमुल्लसच्चन्द्रकम् ।
परामृतसरोवरोदितसरोजसद्रोचिषं
भजामि शिरसि स्थितं गुरुपदारविन्दद्वयम् ॥ ६ ॥

पादुकापञ्चकस्तोत्रं पञ्चवक्त्राद्विनिर्गतम् ।
षडाम्नायफलप्राप्तं प्रपञ्चे चातिदुर्लभम् ॥ ७ ॥

इति गुरुपादुकापञ्चकम् ।

॥ स्तोत्रप्रकरणं समाप्तम् ॥



# गणपत्यथर्वशीर्षोपनिषत् ।



ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

अथ गणेशाथर्वशीर्षं व्याख्यास्यामः ॥ ॐ नमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्तासि । त्वमेव केवलं धर्तासि । त्वमेव केवलं हर्तासि । त्वमेव सर्वं खल्विदं ब्रह्मासि । त्वं साक्षादात्मासि नित्यम् ॥ १ ॥ ऋतं वच्मि । सत्यं वच्मि ॥ २ ॥ अव त्वं माम् । अव वक्तारम् । अव श्रोतारम् । अव दातारम् । अव धातारम् । अवानूचानमव शिष्यम् । अव पश्चात्तात् । अव पुरस्तात् । अवोत्तरात्तात् । अव दक्षिणात्तात् । अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि पाहि समन्तात् ॥ ३ ॥

त्वं वाङ्मयस्त्वं चिन्मयः । त्वमानन्दमयस्त्वं ब्रह्ममयः । त्वं सच्चिदानन्दाद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो विज्ञानमयोऽसि ॥ ४ ॥ सर्वं जगदिदं त्वत्तो जायते । सर्वं जगदिदं त्वत्तस्तिष्ठति । सर्वं जगदिदं त्वयि लयमेष्यति । सर्वं जगदिदं

त्वयि प्रत्येति । त्वं भूमिरापोऽनलोऽनिलो नभः । त्वं चत्वारि वाक्पदानि ॥ ५ ॥ त्वं गुणत्रयातीतः । त्वं देहत्रयातीतः । त्वं कालत्रयातीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भुवःस्वरोम् ॥ ६ ॥

गणादिं पूर्वमुच्चार्य वर्णादिं तदनन्तरम् । अनुस्वारः परतरः । अर्धेन्दुलसितम् । तारेण रुद्धम् । एतत्तव मनुस्वरूपम् । गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तररूपम् । नादः संधानम् । सꣳहिता संधिः । सैषा गणेशविद्या । गणक ऋषिः । निचृद्गायत्री छन्दः । गणपतिर्देवता ॥ ॐ गं गणपतये नमः ॥ ७ ॥ एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् ॥ ८ ॥ एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् । रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥ रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् ॥ भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः ॥ ९ ॥ नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्ते अस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः ॥ १० ॥

एतदथर्वशीर्षं योऽधीते । स ब्रह्मभूयाय कल्पते । स सर्वतः सुखमेधते । स सर्वविघ्नैर्न बाध्यते । स पञ्चमहापापात्प्रमुच्यते ।

सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायंप्रातः प्रयुञ्जानो अपापो भवति । सर्वत्राधीयानोऽपविघ्नो भवति । धर्मार्थकाममोक्षं च विन्दति ॥ इदमथर्वशीर्षमशिष्याय न देयम् ॥ यो यदि मोहाद्दास्यति । स पापीयान् भवति । सहस्रावर्तनात् । यं यं काममधीते । तं तमनेन साधयेत् ॥ ११ ॥ अनेन गणपतिमभिषिञ्चति । स वाग्मी भवति । चतुर्थ्यामनश्नन् जपति । स विद्यावान्भवति । इत्यथर्वणवाक्यम् । ब्रह्माद्याचरणं विद्यात् । न बिभेति कदाचनेति ॥ १२ ॥ यो दूर्वाङ्कुरैर्यजति । स वैश्रवणोपमो भवति । यो लाजैर्यजति स यशोवान्भवति । स मेधावान्भवति यो मोदकसहस्रेण यजति स वाञ्छितफलमवाप्नोति । यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते । अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा । सूर्यवर्चस्वी भवति । सूर्यग्रहे महानद्यां प्रतिमासंनिधौ वा जप्त्वा । सिद्धमन्त्रो भवति । महाविघ्नात्प्रमुच्यते । महादोषात्प्रमुच्यते । महापापात्प्रमुच्यते । स सर्वविद्भवति स सर्वविद्भवति । य एवं वेद ॥ इत्युपनिषत् ॥ १३ ॥

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ भद्रं कर्णेभिः० ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति गणपत्यथर्वशीर्षं समाप्तम् ॥



# श्रीसूक्तम् ।

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १ ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ॥ ३ ॥ कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ ५ ॥

आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः । तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ ६ ॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ ७ ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् । अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ ८ ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥ मनसः काममाकूतिं वाचस्सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥

# श्रीसूक्तम् ।



हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १ ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् । श्रियं देवी-मुपह्वये श्रीर्मा देवीर्जुषताम् ॥ ३ ॥ कां सोस्मितां हिरण्यप्राकारा-मार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहो-पह्वये श्रियम् ॥ ४ ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ ५ ॥

आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः । तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ ६ ॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ ७ ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् । अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ ८ ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥ मनसः काममाकूतिं वाचस्सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥

कर्दमेन प्रजाभूता मयि संभव कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे । नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥ आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १३ ॥ आर्द्रां यः करिणीं यष्टिं पिङ्गलां पद्ममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १४ ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥ १५ ॥

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् । सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ पद्मानने पद्मऊरू पद्माक्षी पद्मसंभवे । तन्मे भजसि पद्माक्षी येन सौख्यं लभाम्यहम् ॥ अश्वदायी गोदायी धनदायी महाधने । धनं मे जुषतां देवि सर्वकामांश्च देहि मे ॥ पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि । विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं मयि संनिधत्स्व ॥ पुत्रपौत्रधनं धान्यं हस्त्यश्वादिगवेरथम् । प्रजानां भवसी माता आयुष्मन्तं करोतु मे । धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः । धनमिन्द्रो बृहस्पतिर्वरुणं धनमस्तु ते ॥ वैनतेय सोमं पिब सोमं पिबतु वृत्रहा । सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥ न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः । भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥ सरसिजनिलये सरोजहस्ते

धवलतरांशुकगन्धमाल्यशोभे । भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् । लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥ महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते । धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥

॥ इति श्रीसूक्तम् ॥



# पुरुषसूक्तम् ।



## प्रथमोऽनुवाकः ॥

सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् । पुरुष एवेदꣳ सर्वम् । यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानः । यदन्नेनातिरोहति । एतावानस्य महिमा । अतो ज्यायाꣳश्च पूरुषः । पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि । त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाऽऽभवात्पुनः । ततो विष्वङ् व्यक्रामत् । साशनानशने अभि । तस्माद्विराडजायत । विराजो अधि पूरुषः । स जातो अत्यरिच्यत । पश्चाद्भू-

धवलतरांशुकगन्धमाल्यशोभे । भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् । लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥ महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते । धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥

॥ इति श्रीसूक्तम् ॥



# पुरुषसूक्तम् ।



## प्रथमोऽनुवाकः ॥

सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् । पुरुष एवेद५ सर्वम् । यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानः । यदन्नेनातिरोहति । एतावानस्य महिमा । अतो ज्याया५श्च पूरुषः । पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि । त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाऽऽभवात्पुनः । ततो विष्वङ् व्यक्रामत् । साशनानशने अभि । तस्माद्विराडजायत । विराजो अधि पूरुषः । स जातो अत्यरिच्यत । पश्चाद्भू-

मिमथो पुरः । यत्पुरुषेण हविषा । देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मः शरद्धविः । सप्तास्यासन्परिधयः । त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वानाः । अबध्नन्पुरुषं पशुम् । तं यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः । तेन देवा अयजन्त । साध्या ऋषयश्च ये । तस्माद्यज्ञात्सर्वहुतः । संभृतं पृषदाज्यम् । पशूꣳस्ताꣳश्चक्रे वायव्यान् । आरण्यान्ग्राम्याश्च ये । तस्माद्यज्ञात्सर्वहुतः । ऋचः सामानि जज्ञिरे । छन्दाꣳसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत । तस्मादश्वा अजायन्त । ये के चोभयादतः । गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः । यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते । ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः । पद्भ्याꣳ शूद्रो अजायत । चन्द्रमा मनसो जातः । चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत । नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकाꣳअकल्पयन् । वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाभिवदन् यदास्ते । धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते । यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ॥ १ ॥

## द्वितीयोऽनुवाकः ॥

अद्भ्यः संभूतः पृथिव्यै रसाच्च । विश्वकर्मणः समवर्त्तताधि । तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे । वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् । तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय । प्रजापतिश्चरति गर्भे अन्तः । अजायमानो बहुधा विजायते ॥

तस्य धीराः परिजानन्ति योनिम् । मरीचीनां पदमिच्छन्ति वेधसः । यो देवेभ्य आतपति । यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातः । नमो रुचाय ब्राह्मये । रुचं ब्राह्मं जनयन्तः । देवा अग्रे तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन् वशे । ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे । नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् । इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण ॥ २ ॥



सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् । विश्वं नारायणं देवमक्षरं परमं पदम् । विश्वतः परमान्नित्यं विश्वं नारायण४ हरिम् । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति । पतिं विश्वस्यात्मेश्वर४ शाश्वत५ शिवमच्युतम् । नारायणं महाज्ञेयं विश्वात्मानं परायणम् । नारायणपरो ज्योतिरात्मा नारायणः परः । नारायणपरं ब्रह्मतत्त्वं नारायणः परः । [नारायणपरो ध्याता ध्यानं नारायणः परः ।] यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं

न्यान्य नारायणः स्थितः । अनन्तमव्ययं कविꣳ समुद्रेऽन्तं विश्व-शंभुवम् । पद्मकोशप्रतीकाशꣳ हृदयं चाप्यधोमुखम् । अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति । हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् । सन्ततꣳ शिलाभिस्तु लम्बत्याकोशसन्निभम् । तस्यान्ते सुषिरꣳ सूक्ष्मं तस्मिन्त्सर्वं प्रतिष्ठितम् । तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः । सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः । [तिर्यगूर्ध्वमधःशायी रश्मयस्तस्य सन्तता ।] सन्तापयति स्वं देहमापादतलमस्तगः । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः । नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः । स ब्रह्म स शिवः [स हरिः] सेन्द्रः सोऽक्षरः परमः स्वराट् ॥

ऋतꣳसत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥

नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ।

विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि यो अस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णो रराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा ॥

॥ ॐ शान्तिः शान्तिः शान्तिः ॥

॥ इति पुरुषसूक्तम् ॥

# दुर्गासूक्तम् ।



जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स
नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ १ ॥
तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां
देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः ॥ २ ॥ अग्ने त्वं
पारयानव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी
बहुला न उर्वी भवा तोकाय तनयाय शंयोः ॥ ३ ॥ विश्वानि नो
दुर्गहा जातवेदस्सिन्धुं न नावा दुरितातिपर्षि । अग्ने अत्रिवन्म-
नसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ ४ ॥ पृतनाजितँ
सहमानमुग्रमग्निँ हुवेम परमात्सधस्थात् । स नः पर्षदति
दुर्गाणि विश्वा क्षामद्देवो अतिदुरितात्यग्निः ॥ ५ ॥

प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि ।
स्वाञ्चाग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभगमायजस्व ॥ गोभिर्जु-
ष्टमयुजो निषिक्तं तवेन्द्रविष्णोरनुसंचरेम । नाकस्य पृष्ठमभि-
संवसानो वैष्णवीं लोक इह मादयन्ताम् ॥

॥ इति दुर्गासूक्तम् ॥



# त्रिपुरोपनिषत्।



ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्संदधाम्यृतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारमवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ तिस्रः पुरस्त्रिपथा विश्वचर्षणी अत्राकथा अक्षरा संनिविष्टा । अधिष्ठायैनामजरा पुराणी महत्तरा महिमा देवतानाम् ॥ १ ॥ नवयोनीर्नव चक्राणि दीधिरे नवैव योगा नव योगिनीश्च । नवानां चक्रे अधिनाथाः स्योना नव मुद्रा नव भद्रा महीनाम् ॥ २ ॥ एका सा आसीत्प्रथमा सा नवासीदासोनविंशदासोनत्रिंशत् । चत्वारिंशदथ तिस्रः समिधा उशतीरिव मातरो मा विशन्तु ॥ ३ ॥ ऊर्ध्वज्वलज्ज्वलनज्योतिरग्रे तमो वै तिरश्चीनमजरं तद्रजोऽभूत् । आनन्दनं मोदनं ज्योतिरिन्दोरेता उ वै मण्डला मण्डयन्ति ॥ ४ ॥ तिस्रश्च रेखाः सदनानि भूमेस्त्रिविष्टपास्त्रिगुणास्त्रिप्रकाशाः । एतत्पुरं पूरकं पूरकाणामत्र प्रथेते मदनो मदन्या ॥ ५ ॥ मदन्तिका मानिनी

मङ्गला च सुभगा च सा सुन्दरी शुद्धसत्त्वा* । लज्जा मतिस्तुष्टि-रिष्टा च पुष्टा लक्ष्मीरुमा ललिता लालपन्ती ॥ ६ ॥ इमां विज्ञाय सुधया मदन्ति परिस्रुता तर्पयन्तः स्वपीठम् । नाकस्य पृष्ठे महतो वसन्ति परं धाम त्रैपुरं चाविशन्ति ॥ ७ ॥ कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः । पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमातादिविद्या ॥ ८ ॥ षष्ठं सप्तममथ वह्निसारथिमस्या मूलत्रिकमादेशयन्तः । कथ्यं कविं कल्पकं काममीशं तुष्टुवांसो अमृतत्वं भजन्ते ॥ ९ ॥ त्रिविष्टपं त्रिमुखं विश्वमातुर्नव रेखाः स्वरमध्यं तदीळे । बृहत्तिथीर्दश पञ्चादि नित्या सा षोडशी पुरमध्यं बिभर्ति ॥ १० ॥ द्वा मण्डला द्वा स्तना बिम्बमेकं मुखं चाधस्त्रीणि गुहा सदनानि । कामीं कलां काम्यरूपां विदित्वा नरो जायते कामरूपश्च काम्यः ॥ ११ ॥ परिस्रुतं झषमाद्यं पलं च भक्तानि योनीः सुपरिष्कृतानि । निवेदयन्देवतायै महत्यै स्वात्मीकृत्य सुकृती सिद्धिमेति ॥ १२ ॥ सृण्येव सितया विश्वचर्षणिः पाशेन प्रतिबध्नात्यभीकान् । इषुभिः पञ्चभिर्धनुषा च विध्यत्यादिशक्तिररुणा विश्वजन्या ॥ १३ ॥ भगः शक्तिर्भगवान्काम ईश उभा दाताराविह सौभगानाम् । समप्रधानौ समसत्त्वौ समोतयोः समशक्तिरजरा विश्वयोनिः ॥ १४ ॥ परिस्रुता हविषा पावितेन प्र संकोचे गलिते वै मनस्तः । सर्वः सर्वस्य जगतो विधाता धर्ता हर्ता विश्वरूपत्वमेति ॥ १५ ॥ इयं महोपनिषत्त्रिपुराया यामक्षरं परमे

* शुद्धिमत्त्वसत्यपर्वगः पाठः ।

र्गीर्भिरीट्टे । एषर्ग्यजुः परमेतच्च सामैवायमथर्वेयमन्या च विद्योम् । १६ ॥ एवं वेदेत्युपनिषत् ॥

ॐ वाङ्मे मनसीति शान्तिः ॥ हरिः ओं तत्सत् ॥

॥ इति त्रिपुरोपनिषत् ॥

# देव्युपनिषत् ।

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ सर्वे वै देवा देवीमुपतस्थुः । कासि त्वं महादेवि ॥ १ ॥ साब्रवीदहं ब्रह्मस्वरूपिणी । मत्तः प्रकृतिपुरुषात्मकं जगच्छून्यं चाशून्यं च । अहमानन्दानानन्दाः । विज्ञानाविज्ञाने अहम् । ब्रह्मा ब्रह्मणी वेदितव्ये । इत्याहाथर्वणी श्रुतिः ॥ २ ॥ अहं पञ्चभूतान्यपञ्चभूतानि । अहमखिलं जगत् । वेदोऽहमवेदोऽहम् । विद्याहमविद्याहम् । अजाहमनजाहम् । अधश्चोर्ध्वं च तिर्यक्चाहम् ॥ ३ ॥ अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत

विश्वदेवैः । अहं मित्रावरुणावुभा बिभर्म्यहमिन्द्राग्नी अहमश्विनावुभौ ॥ ४ ॥ अहं सोमं त्वष्टारं पूषणं भगं दधाम्यहम् । विष्णुमुरुक्रमं ब्रह्माणमुत प्रजापतिं दधामि ॥ ५ ॥ अहं दधामि द्रविणं हविष्मते सुप्राव्ये ३ ये यजमानाय सुन्वते । अहं राष्ट्री सङ्गमनी वसूनामहं सुवे पितरमस्य मूर्धन् ॥ ६ ॥ मम योनिरप्स्वन्तः समुद्रे । य एवं वेद स देवीपदमाप्नोति ॥ ७ ॥ ते देवा अब्रुवन् । नमो देव्यै महादेव्यै शिवायै सततं नमः । नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ ८ ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीं शरणमहं प्रपद्ये सुतरां नाशय ते तमः ॥ ९ ॥ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ १० ॥ कालरात्रिं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम् । सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम् ॥ ११ ॥ महालक्ष्मीश्च विद्महे सर्वसिद्धिश्च धीमहि । तन्नो देवी प्रचोदयात् ॥ १२ ॥ अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव । तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ॥ १३ ॥ कामो योनिः कामकला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः । पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमातादिविद्योम् ॥ १४ ॥ एषात्मशक्तिः । एषा विश्वमोहिनी पाशाङ्कुशधनुर्बाणधरा । एषा श्रीमहाविद्या ॥ १५ ॥ य एवं वेद स शोकं तरति ॥ १६ ॥ नमस्ते अस्तु भगवति भवति मातरस्मान्पातु सर्वतः ॥ १७ ॥ सैषाष्टौ वसवः । सैषैकादश रुद्राः । सैषा

द्वादशादित्याः । सैषा विश्वेदेवाः सोमपा असोमपाश्च । सैषा यातुधाना असुरा रक्षांसि पिशाचा यक्षाः सिद्धाः । सैषा सत्त्वरजस्तमांसि सैषा प्रजापतीन्द्रमनवः । सैषा ग्रहनक्षत्रज्योतींषि कलाकाष्ठादिकालरूपिणी । तामहं प्रणौमि नित्यम् ॥ १८ ॥ तापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम् । अनन्तां विजयां शुद्धां शरण्यां शिवदां शिवाम् ॥ १९ ॥ वियदीकारसंयुक्तं वीतिहोत्रसमन्वितम् । अर्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम् ॥ २० ॥ एवमेकाक्षरं मन्त्रं यतयः शुद्धचेतसः । ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः ॥ २१ ॥ वाङ्माया ब्रह्मभूस्तस्मात्षष्ठं वक्त्रसमन्वितम् । सूर्यो वामश्रोत्रबिन्दुसंयुक्तष्टात्तृतीयकः ॥ २२ ॥ नारायणेन संयुक्तो वायुश्चाधरयुक्ततः । विच्चे नवार्णकोऽणुः स्यान्महदानन्ददायकः ॥ २३ ॥ हृत्पुण्डरीकमध्यस्थां प्रातःसूर्यसमप्रभाम् । पाशाङ्कुशधरां सौम्यां वरदाभयहस्तकाम् । त्रिनेत्रां रक्तवसनां भक्तकामदुघां भजे ॥ २४ ॥ नमामि त्वामहं देवीं महाभयविनाशिनीम् । महादुर्गप्रशमनीं महाकारुण्यरूपिणीम् ॥ २५ ॥ यस्याः स्वरूपं ब्रह्मादयो न जानन्ति तस्मादुच्यतेऽज्ञेया । यस्या अन्तो न विद्यते तस्मादुच्यतेऽनन्ता । यस्या ग्रहणं नोपलभ्यते तस्मादुच्यतेऽलक्ष्या । यस्या जननं नोपलभ्यते तस्मादुच्यतेऽजा । एकैव सर्वत्र वर्तते तस्मादुच्यत एका । एकैव विश्वरूपिणी तस्मादुच्यते नैका । अत एवोच्यतेऽज्ञेयानन्तालक्ष्याजैका नैकेति ॥ २६ ॥ मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी । ज्ञानानां चिन्मयातीता शून्यानां

शून्यसाक्षिणी ॥ २७ ॥ यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता । [ दुर्गात्संत्रायते यस्माद्देवी दुर्गेति कथ्यते । प्रपद्ये शरणं देवीं दुंदुर्गे दुरितं हर ॥ ] तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम् । नमामि भवभीतोऽहं संसारार्णवतारिणीम् ॥ २८ ॥ इदमथर्वशीर्षं योऽधीते स पञ्चाथर्वशीर्षजपफलमवाप्नोति । इदमथर्वशीर्षमज्ञात्वा योऽर्चां स्थापयति शतलक्षं प्रजप्त्वापि सोऽर्चासिद्धिं न विन्दति ॥ २९ ॥ शतमष्टोत्तरं चास्याः पुरश्चर्याविधिः स्मृतः ॥ ३० ॥ दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्यते । महादुर्गाणि तरति महादेव्याः प्रसादतः ॥ ३१ ॥ सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायं प्रातः प्रयुञ्जानोऽपापो भवति । निशीथे तुरीयसन्ध्यायां जप्त्वा वाक्सिद्धिर्भवति । नूतनप्रतिमायां जप्त्वा देवतासांनिध्यं भवति । प्राणप्रतिष्ठायां जप्त्वा प्राणानां प्रतिष्ठा भवति । भौमाश्विन्यां महादेवीसंनिधौ जप्त्वा महामृत्युं तरति । य एवं वेदेत्युपनिषत् ॥ ३२ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ओं तत्सत् ॥

॥ इति देव्युपनिषत् ॥



# भावनोपनिषत् ।



ओं भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ । आत्मानमखण्डमण्डलाकारमावृत्य सकलब्रह्माण्डमण्डलं स्वप्रकाशं ध्यायेत् । श्रीगुरुः सर्वकारणभूता शक्तिः ॥ १ ॥ तेन नवरन्ध्ररूपो देहः ॥ २ ॥ नवचक्ररूपं श्रीचक्रम् ॥ ३ ॥ वाराही पितृरूपा कुरुकुल्ला बलिदेवता माता ॥ ४ ॥ पुरुषार्थाः सागराः ॥ ५ ॥ देहो नवरत्नद्वीपः ॥ ६ ॥ त्वगादिसप्तधातुरोमसंयुक्तः ॥ ७ ॥ संकल्पाः कल्पतरवस्तेजः कल्पकोद्यानम् ॥ ८ ॥ रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षडृतवः ॥ ९ ॥ ज्ञानमर्घ्यं ज्ञेयं हविर्ज्ञाता होता ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम् ॥ १० ॥ नियतिः शृङ्गारादयो रसा अणिमादयः ॥ ११ ॥ कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमया ब्राह्म्याद्यष्ट शक्तयः ॥ १२ ॥ आधारनवकं मुद्राशक्तयः ॥ १३ ॥ पृथिव्यप्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थानि मनोविकारः कामाकर्षिण्यादिषोडश शक्तयः ॥ १४ ॥ वचनादानगमनविसर्गानन्दहानोपादानोपेक्षाख्यबुद्धयोऽनङ्गकुसुमाद्यष्टौ ॥ १५ ॥ अलम्बुसा कुहूर्विश्वोदरा वारणा हस्तिजिह्वा यशोवती पयस्विनी गान्धारी पूषा शङ्खिनी

सरस्वतीडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः सर्वसंक्षोभिण्यादिचतुर्दश शक्तयः ॥ १६ ॥ प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जया दश वायवः सर्वसिद्धिप्रदादिबहिर्दशारदेवताः ॥ १७ ॥ एतद्वायुसंसर्गकोपाधिभेदेन रेचकः पाचकः शोषको दाहकः प्लावक इति प्राणमुख्यत्वेन पञ्चधा जठराग्निर्भवति ॥ १८ ॥ क्षारक उद्गारकः क्षोभको जृम्भको मोहक इति नागप्राधान्येन पञ्चविधास्ते मनुष्याणां देहगा भक्ष्यभोज्यचोष्यलेह्यपेयात्मकपञ्चविधमन्नं पाचयन्ति ॥ १९ ॥ एता दश वह्निकलाः सर्वज्ञाद्या अन्तर्दशारदेवताः ॥ २० ॥ शीतोष्णसुखदुःखेच्छाः सत्त्वं रजस्तमो वशिन्यादिशक्तयोऽष्टौ ॥ २१ ॥ शब्दादितन्मात्राः पञ्च पुष्पबाणाः ॥ २२ ॥ मन इक्षुधनुः ॥ २३ ॥ रागः पाशः ॥ २४ ॥ द्वेषोऽङ्कुशः ॥ २५ ॥ अव्यक्तमहदहङ्काराः कामेश्वरीवज्रेश्वरीभगमालिन्योऽन्तस्त्रिकोणगा देवताः ॥ २६ ॥ निरुपाधिकसंविदेव कामेश्वरः ॥ २७ ॥ सदानन्दपूर्णः स्वात्मैव परदेवता ललिता ॥ २८ ॥ लौहित्यमेतस्य सर्वस्य विमर्शः ॥ २९ ॥ अनन्यचित्तत्वेन च सिद्धिः ॥ ३० ॥ भावनायाः क्रिया उपचारः ॥ ३१ ॥ अहं त्वमस्ति नास्ति कर्तव्यमकर्तव्यमुपासितव्यमिति विकल्पानामात्मनि विलापनं होमः ॥ ३२ ॥ भावनाविषयाणामभेदभावना तर्पणम् ॥ ३३ ॥ पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनम् ॥ ३४ ॥ एवं मुहूर्तत्रितयं मुहूर्तद्वितयं मुहूर्तमात्रं वा भावनापरो जीवन्मुक्तो भवति स एव शिवयोगीति गद्यते ॥ ३५ ॥

कादिमतेनान्तश्चक्रभावनाः प्रतिपादिताः ॥ ३६ ॥ य एवं वेद सोऽथर्वशिरोऽधीते ॥ ३७ ॥ इत्युपनिषत् ॥

ओं भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ओं तत्सत् ॥

॥ इति भावनोपनिषत् ॥



# बह्वृचोपनिषत् ।



ओं वाङ्मे मनसीति शान्तिः ॥

हरिः ॐ । देवी ह्येकाग्र एवासीत् । सैव जगदण्डमसृजत् । कामकलेति विज्ञायते । शृङ्गारकलेति विज्ञायते । तस्या एव ब्रह्मा अजीजनत् । विष्णुरजीजनत् । रुद्रोऽजीजनत् । सर्वे मरुद्गणा अजीजनन् । गन्धर्वाप्सरसः किंनरा वादित्रवादिनः समन्तादजीजनन् । भोग्यमजीजनत् । सर्वमजीजनत् । सर्वं शाक्तमजीजनत् । अण्डजं स्वेदजमुद्भिज्जं जरायुजं यत्किंचैतत्प्राणि स्थावरजङ्गमं मनुष्यमजीजनत् ॥

सैषा परा शक्तिः । सैषा शांभवी विद्या कादिविद्येति वा हादिविद्येति वा सादिविद्येति वा । रहस्यमोमों वाचि प्रतिष्ठा । सैव पुरत्रयं शरीरत्रयं व्याप्य बहिरन्तरवभासयन्ती देशकालवस्त्वन्तरासङ्गान्महात्रिपुरसुन्दरी वै प्रत्यक्

चितिः । सैवात्मा ततोऽन्यदसत्यमनात्मा । अत एषा ब्रह्मसंवित्तिर्भावाभावकलाविनिर्मुक्ता चिद्विद्याऽद्वितीयब्रह्मसंवित्तिः सच्चिदानन्दलहरी महात्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव विभाति । यदस्ति सन्मात्रम् । यद्विभाति चिन्मात्रम् । यत्प्रियमानन्दं तदेतत्पूर्वाकारा महात्रिपुरसुन्दरी । त्वं चाहं च सर्वं विश्वं सर्वदेवता । इतरत्सर्वं महात्रिपुरसुन्दरी । सत्यमेकं ललिताख्यं वस्तु तदद्वितीयमखण्डार्थं परं ब्रह्म । पञ्चरूपपरित्यागादस्वरूपप्रहाणतः । अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥ इति । प्रज्ञानं ब्रह्मेति वा अहं ब्रह्मास्मीति वा भाष्यते । तत्त्वमसीत्येव संभाष्यते । अयमात्मा ब्रह्मेति वा ब्रह्मैवाहमस्मीति वा योऽहमस्मीति वा सोऽहमस्मीति वा योऽसौ सोऽहमस्मीति वा या भाव्यते सैषा षोडशी श्रीविद्या पञ्चदशाक्षरी श्रीमहात्रिपुरसुन्दरी बालाम्बिकेति बगलेति वा मातङ्गीति स्वयंवरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति वाराहीति तिरस्करिणीति राजमातङ्गीति वा शुकश्यामलेति वा लघुश्यामलेति वा अश्वारूढेति वा प्रत्यङ्गिरा धूमावती सावित्री गायत्री सरस्वती ब्रह्मानन्दकलेति । ऋचो अक्षरे परमे व्योमन् । यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति । य इत्तद्विदुस्त इमे समासते ॥ इत्युपनिषत् ॥ ओं वाङ्मे मनसीति शान्तिः ॥ हरिः ओं तत्सत् ॥

॥ इति बह्वृचोपनिषत् ॥



# शान्तिपञ्चकम् ।

शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ॥ ओं शान्तिः शान्तिः शान्तिः ॥

शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् ॥ ओं शान्तिः शान्तिः शान्तिः ॥

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ ओं शान्तिः शान्तिः शान्तिः ॥

नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो

मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माऽहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादां वैश्वदेवीं वाचमुद्यासँ शिवामदस्ताञ्जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत् । शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्म प्रजापती । भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मापातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासँ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥ ओं शान्तिः शान्तिः शान्तिः ॥

तच्छंयोरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

॥ इति शान्तिपञ्चकम् ॥



॥ श्रीः ॥

# †देवीमानगणनम् ।

अथ श्रीदेवीमानगणनमष्टाङ्गं निरूप्यते—

युगः परिवृत्तिः वर्षः मासः दिनं नित्या वारः घटिका चेति तान्यष्टाङ्गानि । एतानि जपादेः सपर्यादेश्च संकल्पे क्रमशः । पारायणादेस्तु वार-घटिका दिन-नित्या-वर्ष-मास-युग-परिवृत्तितः ॥

तद्विवेकः—युगाः षट्त्रिंशदकादयः । अकादयो नाम—अकार एकः स्वरः सानुस्वारः, ककारादयः क्षकारान्ताः पञ्चत्रिंशद्व्यञ्जनानि च सानुस्वाराणि, *शिवादिषट्त्रिंशत्तत्त्वाख्यानि ।

---

† पदवाक्यविद्पण्डित-देवरकोण्ड-ग्रामस्थ बालसुब्रह्मण्यशास्त्रिभिर्विरचितमिदम् ।

| | | |
|---|---|---|
| *१. अं शिवतत्त्वम् | १३. ठं प्रकृति | २५. भं पायु |
| २. कं शक्ति | १४. डं अहङ्कार | २६. मं उपस्थ |
| ३. खं सदाशिव | १५. ढं बुद्धि | २७. यं शब्द |
| ४. गं ईश्वर | १६. णं मनस् | २८. रं स्पर्श |
| ५. घं शुद्धविद्या | १७. तं श्रोत्र | २९. लं रूप |
| ६. ङं माया | १८. थं त्वक् | ३०. वं रस |
| ७. चं कला | १९. दं चक्षुः | ३१. शं गन्ध |
| ८. छं अविद्या | २०. धं जिह्वा | ३२. षं आकाश |
| ९. जं राग | २१. नं घ्राण | ३३. सं वायु |
| १०. झं काल | २२. पं वाक् | ३४. हं वह्नि |
| ११. ञं नियति | २३. फं पाणि | ३५. ळं जल |
| १२. टं पुरुष | २४. बं पाद | ३६. क्षं पृथ्वी |

यथा अं शिवतत्त्वयुगः, कं शक्तितत्त्वयुगः, खं सदाशिवतत्त्वयुगः इत्यादयः ॥

प्रतियुगं परिवृत्तयोऽपि षट्त्रिंशदकादयः । यथा अं शिवतत्त्वपरिवृत्तिः, कं शक्तितत्त्वपरिवृत्तिः इत्यादयः । एवमन्यत्रापि षट्त्रिंशदकादयः तत्तन्नामाङ्किता ऊह्याः ॥

प्रतिपरिवृत्ति वर्षा अपि षट्त्रिंशदकादयः ॥

प्रतिवर्षं मासाः षोडश अकारादि-सानुस्वारस्वरात्मानः ।

ते च *अमृतादिचन्द्रकलानामानः, निवृत्त्यादिसदाशिवकलाख्याना वा, कामेश्वर्यादिमहानित्यान्तनित्यानामानो वा ॥

---

| | | |
|---|---|---|
| *१. अं अमृताकला | निवृत्ति कला | कामेश्वरी |
| २. आं मानदा | प्रतिष्ठा | भगमालिनी |
| ३. इं पूषा | विद्या | नित्यक्लिन्ना |
| ४. ईं तुष्टि | शान्ति | भेरुण्डा |
| ५. उं पुष्टि | इन्धिका | वह्निवासिनी |
| ६. ऊं रति | दीपिका | महावज्रेश्वरी |
| ७. ऋं धृति | रेचिका | शिवदूती |
| ८. ॠं शशिनी | मोचिका | त्वरिता |
| ९. ऌं चन्द्रिका | परा | कुलसुन्दरी |
| १०. ॡं कान्ति | सूक्ष्मा | नित्या |
| ११. एं ज्योत्स्ना | सूक्ष्मामृता | नीलपताका |
| १२. ऐं श्री | ज्ञाना | विजया |
| १३. ओं प्रीति | ज्ञानामृता | सर्वमङ्गला |
| १४. औं अङ्गदा | आप्यायिनी | ज्वालामालिनी |
| १५. अं पूर्णा | व्यापिनी | चित्रा |
| १६. अः पूर्णामृता | व्योमरूपा | महानित्या |

यथा—अं अमृताकलामासः, अं निवृत्तिकलामासः, अं कामेश्वरीनित्यामासो वा ॥

प्रतिमासं दिनानि षट्त्रिंशदकादीनि ॥

प्रतिदिनमेका नित्या । नित्याश्च विसर्जनीयेतरस्वरात्मानः सानुस्वाराः ॥

*कामेश्वर्यादि-चित्रान्तनामाङ्किताास्ताः पञ्चदश शुक्लपक्षे यथाक्रमं चरन्ति । कृष्णपक्षे च विलोमेन । यथा शुक्लपक्षे प्रतिपदि अं शुक्लकामेश्वरीदिननित्या, ततः आं शुक्लभगमालिनीदिननित्या इत्याद्याः, अं शुक्लचित्रादिननित्या इत्यन्ताः । कृष्णपक्षे च अं कृष्णचित्रादिननित्या, औं कृष्णज्वालामालिनीदिननित्या इत्याद्याः अं कृष्णकामेश्वरीदिननित्या इत्यन्ताः ॥

प्रतिमासं वाराश्चत्वारः । प्रतिवारं अ-ल-क्ष-च-ट-त-प-य-यादिवर्णादिमाः पुनः पठितप्रथमवर्णान्ताः सानुस्वाराः ¶प्रकाशानन्दनाथात्मानो नव वासराः । यथा—अं आं इं ईं उं ऊं ऋं ॠं अं प्रकाशानन्दनाथवासरः । लं लृं एं ऐं ओं औं अं अः लं विमर्शानन्दनाथवासरः इत्यादयः ॥

प्रतिवासरं घटिकाः षष्टिसंख्याकाः ‡अ-ए-च-त-याद्यन्य-

*१७६ पुटे द्रष्टव्यः

‡३२ पुटे द्रष्टव्यः

¶१. प्रकाशानन्दनाथ
२. विमर्शानन्दनाथ
३. आनन्दानन्दनाथ
४. ज्ञानानन्दनाथ
५. सत्यानन्दनाथ
६. पूर्णानन्दनाथ
७. स्वभावानन्दनाथ
८. प्रतिभानन्दनाथ
९. सुभगानन्दनाथ

तमाख्योदयघटिकाद्याः । ताश्च विसर्जनीयस्वररहितमातृकार्णात्मानः क्रमशः पञ्चाशत् पुनः आरब्धा एव दशेति । यथा— अकारघटिका, आकारघटिका इत्यादयः । अकारोदयघटिका एकारोदयघटिका इत्यादयोऽपि ॥

सर्वाण्येतान्यष्टाङ्गानि सृष्ट्यादितः तत्तुल्यारम्भकल्पादितो वा साध्यानि ॥

तत्साधनप्रकारः —

व्यपगतवत्सरमण्डल-
गुणिता षष्टिर्गजाब्धिसंमिश्रा ।
प्रभवादिगताब्दयुता
भवति गताब्दः स एव वर्षगणः ॥ १ ॥

वर्षगणः शरतत्त्वै-
स्तिथिभिश्चन्द्राग्निभिः शरक्ष्माभिः ।
दिनघटिकापलदण्डै-
र्गुणितः कल्यादिदिवसगणः ॥ २ ॥

दिवसगणस्तिथिदण्डै-
श्चन्द्रेषुपलैर्भुजङ्गघटिकाभिः ।
रहितो दिनद्वयेन च
कलिशुद्धदिनं हि भवति वर्षस्य ॥ ३ ॥

गतमासवाक्ययुक्तं
गतदिनसहितं च वर्षशुद्धदिनम् ।

गतकलिशुद्धदिनं स्यात्
*शुक्रादिकमिष्टदिवसस्य ॥ ४ ॥

अत्र घटिकादयो यदि दिनार्धमानादधिकाः तर्हि तत् शुद्धदिनमेकाधिकं भवति । न्यूनाश्चेत् त्याज्यास्ता एव घटिकादयः ॥

मासवाक्यानि—

| | | | | | |
|---|---|---|---|---|---|
| रक्षेशोमीनस्त्रो | दि | 30 | 55 | 32 | मेषस्य |
| विविधकरतनुः | | 62 | 19 | 44 | ऋषभस्य |
| श्रीरतः शूलधेनुः | | 93 | 56 | 22 | मिथुनस्य |
| स्वर्गद्वारोन्मुखाःस्युः | | 125 | 24 | 34 | कटकस्य |
| भुवि चरतिमया | | 156 | 26 | 44 | सिंहस्य |
| तैनर्थशस्तुदीपः । | | 186 | 54 | 6 | कन्यायाः |
| लोकाब्दंवस्तुपुत्रः | | 216 | 48 | 13 | तुलायाः |
| स्थलजयतिवरः | | 246 | 18 | 37 | वृश्चिकस्य |
| निर्गलाङ्गेशसारः | | 275 | 39 | 30 | धनुषः |
| तर्यतत्रामनाडी | | 305 | 6 | 46 | मकरस्य |
| नियममनित्रियस्त्रो | | 334 | 55 | 10 | कुम्भस्य |

(मेषमासादितः स्युः) ॥ ५ ॥

गतकलिशुद्धदिनेऽस्मिन्नाप्ते बाणैः अ ए च त य पूर्वाः ।
घटिकाः शेषेण गताः पञ्चाशद्दश च मातृकाख्याः स्युः ॥ ६ ॥
रुद्रैराप्तेऽस्मिन् गतकलिशुद्धदिने भवन्ति शेषेण ।
अ ल क च ट त प य पाद्याः प्रकाशपूर्वा हि वासरा याताः ॥७॥

---

* गणितागतो वारः स्वेष्टवारश्च यदि संगच्छेते तत एव तत् इष्टकलिशुद्धदिन स्पष्टं भवति ॥

गतकलिशुद्धदिने खगुणाप्ते शेषेण गतनित्याः।
अनुलोमविलोमाभ्यां कामेश्वर्यादिचित्रान्ताः॥ ८॥

ऋतुवह्निभिराप्ते गतकलिशुद्धदिने गतानि हि दिनानि।
शेषेण भवन्तीमान्यकादिकान्येव तत्वनामानि॥ ९॥

आप्ते नृपैर्दिनफले शेषेण भवन्त्यकाराद्याः।
मासा अमृतकलाद्या याता अथवा सदाशिवकलाद्याः॥ १०॥

मासफले शास्त्रगुणैराप्ते शेषेण गतवर्षाः।
वर्षफले शास्त्रगुणैराप्ते परिवृत्तयो गताः शेषैः॥ ११॥

परिवृत्तिफले शास्त्रगुणाप्ते शेषेण यातयुगाः।
तत्वाख्याः सर्वे इमे वर्षाः परिवृत्तयो युगाश्च स्युः॥ १२॥

य एतान्द्वादश श्लोकानधीते साधकः क्रमात्।
अष्टाङ्गमार्गस्तस्यैव सुलभश्च सुखप्रदः॥ १३॥

उदाहरणम्—17th July, 1955—

मन्मथवर्षे कर्कमासे प्रथमदिनं भानुवासरः। अस्य दैवीमानरीत्या अष्टाङ्गगणनम्। यथा—

| | |
|---|---|
| *व्यपगतवत्सरमण्डलानि | 83 |
| षड्गुणिता षष्टिः | 83 × 60 = 4,980 |
| गजाब्धिसंमिश्रा | + 48 = 5,028 |

*ऐषमो मन्मथवर्षे गतवत्सरमण्डलानि ८३। एतानि प्रतिप्रभवारम्भ एकैकाधिकानि भवन्ति॥

| | | |
|---|---|---|
| *प्रभवादिगताब्दा | 28 | |
| तद्युता | | 5,028 + 28 = 5,056 वर्षगण |
| वर्षगण शरत्त्वै गुणित | 5 056 × 365 दिनै | |
| ,, तिथिभि , | 5,056 × 15 घटिकाभि † | |
| ,, चन्द्राग्निभि , | 5,056 × 31 पलै | |
| ,, शरस्माभि ,, | 5,056 × 15 दण्डै ‡ | |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| *१ | प्रभव | १६ | चित्रभानु | ३१ | हेमलम्ब | ४६ | परिधावी |
| २ | विभव | १७ | सुभानु | ३२ | विलम्बी | ४७ | प्रमाधी |
| ३ | शुक्ल | १८ | तारण | ३३ | विकारी | ४८ | आनन्द |
| ४ | प्रमोद | १९ | पार्थिव | ३४ | शार्वरी | ४९ | राक्षस |
| ५ | प्रजापति | २० | अव्यय | ३५ | प्लव | ५० | अनल |
| ६ | अङ्गिरा | २१ | सर्वजित् | ३६ | शुभकृत् | ५१ | पिङ्गल |
| ७ | श्रीमुख | २२ | सर्वधारी | ३७ | शोभकृत् | ५२ | कालयुक्त |
| ८ | भाव | २३ | विरोधी | ३८ | क्रोधी | ५३ | सिद्धार्थ |
| ९ | युवा | २४ | विकृत | ३९ | विश्वावसु | ५४ | रौद्र |
| १० | धाता | २५ | खर | ४० | पराभव | ५५ | दुर्मति |
| ११ | ईश्वर | २६ | नन्दन | ४१ | प्लवङ्ग | ५६ | दुन्दुभि |
| १२ | बहुधान्य | २७ | विजय | ४२ | कीलक | ५७ | रुधिरोद्गारी |
| १३ | प्रमाथी | २८ | जय | ४३ | सौम्य | ५८ | रक्ताक्ष |
| १४ | विक्रम | २९ | मन्मथ | ४४ | साधारण | ५९ | क्रोधन |
| १५ | वृष | ३० | दुर्मुख | ४५ | विरोधकृत् | ६० | अक्षय |

†नाडिका घटिका इति च समानार्थकौ ।

‡षष्ट्या दण्डै एक पल । षष्ट्या पलै एका घटिका । षष्ट्या घटिकाभि एक दिनम् । (दण्ड = 2/5 Second) दण्डस्तत्परश्चेत्यनर्थान्तरम् । पला विकला विघटिकाश्च पर्याया । घटिका कला च समानार्थकौ ॥

| | दिन | घ | प | द |
|---|---|---|---|---|
| | = 365 | 15 | 31 | 15× |
| | | 5056 | | वर्षगणः |
| कल्यादिदिवसगणः | 18,46,747 | 53 | 20 | 0— |
| तिथि (15) दण्डैः चन्द्रेषु (51) पलैः भुजङ्ग (8) घटिकाभिः दिनद्वयेन च रहितः — | 2 | 8 | 51 | 15 |
| वर्षकलिशुद्धदिनं | 18,46,745 | 44 | 28 | 45+ |
| गतमास (=मिथुन) वाक्ययुक्तं (यथास्थितं मासवाक्ये पत्रके) | 93 | 56 | 22 | 0 |
| | 18,46,839 | 40 | 50 | 45+ |
| गतदिनसहितं | 0 | 0 | 0 | 0 |
| इष्टदिवसकलिशुद्धदिनं | 18,46,839 | 40 | 50 | 45+ |
| अत्र घटिकादयः दिनार्धमानात् अधिकाः अतः पूरकं | 0 | 19 | 9 | 15 |
| | 18,46,840 | 0 | 0 | 0 |

वारपरीक्षा—18,46,840 ÷ 7 = 2,63,834—2 शिष्टम् । तेन शुक्रादयो गता वाराः 2. अतः इष्टदिनं भानुवासरो दृष्टः ॥

१. अस्मिन् गतकलिशुद्धदिने बाणैः भक्ते (18,46 840 ÷ 5) सति शिष्टम् 0. अतः वर्तमाना उदयघटिका 'अ' ॥

२. अस्मिन् गतकलिशुद्धदिने रसैः भक्ते (18,46,840 ÷ 9) सति शिष्टम् 4. तथा च 'चं ज्ञानानन्दनाथ' वासरो गतः । अतः वर्तमानः 'टं सत्यानन्दनाथवासरः' ॥

३. गतकलिशुद्धदिने त्रिगुणभक्ते (18,46,840 ÷ 30) सति शिष्टम्

10. तथा च गता नित्या: 10. तत्र कामेश्वर्यादिनित्यान्ता: गता:। अत वर्तमाना नित्या 'नीलपताका' ।

४. गतकलिशुद्धदिने ऋतुवह्निभि. आप्ते (18,46,840 ÷ 36) सति फलं 51,301. शिष्टम् 4. तथा च गतं 4 'गं ईश्वर' दिनम् । अत: वर्तमानं 'घं शुद्धविद्या' ॥

५. दिनफले नृपैः आप्ते (51,301 — 16) फलं 3,206. शिष्टम्
5 तेन 5 ङं पुष्टिमासो गतः । अतः वर्तमान. 'ॐ रतिमास.' ॥

६. मासफले शास्त्रगुणैः आप्ते (3206 — 36) सति फलं 89. शिष्टम् 2. तेन गतो वर्षः 2 'कं शक्तिः' । अतः वर्तमान. 'खं सदाशिव' ॥'

७. वर्षफले शास्त्रगुणैः आप्ते (89 ÷ 36) सति फलं 2 शिष्टम् 17. तेन गता 17 'तं श्रोत्र' परिवृत्तिः । अत: वर्तमाना 'थं त्वक्' ॥

८. परिवृत्तिफले शास्त्रगुणाप्ते (2 ÷ 36) सति फलं 0. शिष्टम् 2. तेन गतः 2 'कं शक्ति ' युगः । अतो वर्तमान. 'खं सदाशिव ' ॥

## पूर्वोक्तदिनस्य सङ्कल्पक्रमः । पूजायां जपे च—

आदिगुरोः परशिवस्याज्ञया प्रवर्तमानदेवीमानेन षट्त्रिंशत्तत्त्वात्मकसकलप्रपञ्चसृष्टिस्थितिसंहारतिरोधानानुग्रहकारिण्याः श्रीपराशक्त्याः *ऊर्ध्वंभ्रूविभ्रमे, खं सदाशिवतत्वयुगे, थं त्वक् तत्वपरिवृत्तौ, खं सदाशिवतत्ववर्षे, †ॐ रतिकलामासे, घं शुद्ध-

---

* षट्त्रिंशद्भिर्युगैरेको महायुग । महायुगैस्तादृशैरेकः कल्प. । कल्पैः पुनस्तादृशैरेको महाकल्पः । महाकल्पैश्च तादृशै देव्या ऊर्ध्वभ्रूविभ्रमः । तस्मिन्नेव सृष्टि. । तादृश्येव अधोभ्रूविभ्रमे लयः ॥

† अ: व्योमरूपाकलामासे. महानित्यामासे वा ॥

विद्यातत्त्वदिवसे, ऐं नीलपताकादिननित्यायां, [१]ओं कृष्णनित्यक्लिन्ना नित्यातिथिनित्यायां, टं ठं डं ढं णं सत्यानन्दनाथवासरे, अकारघटिकोदये, श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकाप्रीत्यर्थं,

## पारायणे

आदिगुरोः पराशिवस्याज्ञया प्रवर्तमानदेवीमानेन षट्त्रिंशत्तत्त्वात्मकसकलप्रपञ्चसृष्टिस्थितिसंहारतिरोधानानुग्रहकारिण्याः श्रीपराशक्त्या ऊर्ध्वभूविभ्रमे, टं ठं डं ढं णं सत्यानन्दनाथवासरे, अकारघटिकोदये, घं शुद्धविद्यातत्त्वदिवसे, ऐं नीलपताकादिननित्यायां, खं सदाशिवतत्त्ववर्षे, ऊं रतिकलामासे, खं सदाशिवतत्त्वयुगे, थं त्यक्तत्वपरिवृत्तौ श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकाप्रीत्यर्थं अमुकपारायणं करिष्ये ॥

अस्य दिवसस्य दिन-नित्य-विद्या-हंसः = खं ऊं घं हंसः ॥

इति सौरमानेन देवीमानगणनम् ॥

---

अथ चान्द्रमानरीत्या गणनप्रकारः ।

वर्षगणेऽर्कैर्निहते लब्धश्चैत्रादियातमासाढ्यः ।
युक्तः स्वशिवाङ्कांशै-र्गजनेत्रहृतैः स भवति मासगणः ॥ १ ॥
मासगणः स्वाग्निहतः शुक्लप्रथमादियाततिथिमिश्रः ।
स्वाग्निसमरुद्रांशैः शिवहृतैर्विनाऽहर्गणः स शुक्लादिः ॥ २ ॥

---

[१] एतास्तिथिनित्याश्च नाम्ना दिननित्योपमाः । परं त्वेताः पयास्स्यशुक्ल-कृष्णपक्षद्वयप्रतिपदादितिथीरनुसरन्ति ॥

नायातो यदि वारो यातः स्वेष्टोऽधुनातनाद् द्युगणात् ।
गतकलिदिवसगणोऽयं सैकः कार्यस्तदा निरेको वा ॥ ३ ॥

अथ उदाहरणतया पूर्वोक्त (पुटे १८०) 17-7-1955 दिनस्यैव चान्द्रमानरीत्या कलिशुद्धदिनं साध्यते:—

१. वर्षगणे [पुटे १८१] — 5056
अर्कैर्निहते — $5056 \times 12$
लब्धः — 60672
चैत्रादिज्येष्ठान्ता गता मासाः त्रयः — $60672 + 3$
$= 60675$

गजनेत्र (28) हतैः स्वशिवाङ्क (911) अंशैः युक्तः $60675 + \frac{60675 \times 28}{911}$

$= 60675 +$ (अधिमासाः) $1864 = 62539$

सः [62539] मासगणो भवति ।

२. मासगणः [पूर्वश्लोकसाधितः] — 62539
खाग्निहतः — $62539 \times 30 = 1876170$
आषाढमासे गततिथयः 27 — $1876170 + 27$
$= 1876197$

स्वाग्निखमरद् (703) अंशैः शिव (11) हतैः विना

$$1876197 - \frac{1876197 \times 11}{703}$$

$= 1876197 - 29357 = 1846840$

[अयम्] अहर्गणः 1846840 सौरमानरीत्याप्ययमेव ।
सः शुक्रादिः $1846840 \div 7 = 263834 - 2 =$ भानुवारः ।
[अत्र 2 शेषो भवति । अतो यातः स्थिरवारः । ततः भानुवारः प्रचरतीति ज्ञायते ।]

बार्हस्पत्यमानेन वर्षगणसाधने दिनगणानयने च कश्चन विशेषोऽस्ति । नृपगणसाधने 'गजाब्धि' (48) स्थाने (पुटे १८०) 'रसाग्नि' (36) ग्राह्यः । दिनगणानयने चान्द्रमानपद्धतिरेव ग्राह्या । तत्र यदि इष्टदिनं कृष्णपक्षीयं भवति तर्हि शुक्लप्रथमादियाततिथिमिश्रणानन्तरं शरचन्द्राः (15) त्याज्याः । इतरत्सर्वं समानम् ॥

इति देवीमानगणनं समाप्तम् ।

---

इति बदरिकाश्रमस्थ श्रीगुहानन्दनाथपरमहंसपरिव्राजकाचार्यावधूत-
स्वामिनां चरणकमलसक्तचित्तैः तदन्तेवासिभिः चिदानन्दनाथेति
दीक्षानामधेयमण्डितैः श्रीगुहानन्दमण्डली—प्रतिष्ठापकैः
ब्रह्मश्री नाडिमिण्टि सुब्रह्मण्यार्याह्वयैः संकलितं
श्रीविद्यानित्याह्निकम्
संपूर्णम् ॥

